No. 54. ] [ *Price Rupee One.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# विभक्त्यर्थनिर्णयः ।

न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः

नैयायिकाग्रणीमहामहोपाध्यायझोपाख्य

श्रीगिरिधरोपाध्यायरचितः ।

## VIBHAKTYARTHANIRNAYA,

BY

MAHÂMAHOPÂDHYÂYA SRI GIRIDHARA UPÂDHYÂYA.

EDITED BY

SRI JÎVANÂTHA MISRA NYÂYATIRTHA,

LATE SCHOLAR, SANSKRIT COLLEGE CALCUTTA.

FASCICULUS V.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES.

AGENT:—OTTO HARRASSOWITZ, LEIPZIG:

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS.

BENARES.

1902.

श्रीः

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितमन्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—५४

न्याभावत आधेयतया प्रीतावन्वयः । दूरान्तिकार्थकशब्दयोगे पञ्चमीं ज्ञापयति । "दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामि"ति सूत्रम् । दूरान्तिकार्थकैः शब्दैर्योगे षष्ठी भवत्यन्यतरस्यां पञ्चमी भवतीत्यर्थकं ग्रामस्य ग्रामाद्वा दूरं विप्रकृष्टं वा इत्यत्र दूरादिशब्दस्य दैशिकपरत्वविशिष्टः तादृशपरत्वव्यञ्जकबहुतरसंयोगघटितपरम्पराश्रयो वाऽर्थः षष्ठीपञ्चम्योरवधित्वमर्थः परत्वे बहुतरसंयोगे वाऽन्वेति तथा च ग्रामावधिकपरत्ववानित्यन्वबोधः । ग्रामस्य ग्रामाद्वाऽन्तिकं सविधं वा इत्यत्रान्तिकशब्दस्य दैशिकापरत्वविशिष्टस्तादृशापरत्वव्यञ्जकस्वल्पतरसंयोगघटितपरम्पराश्रयो वाऽर्थः ग्रामावधिकापरत्ववानित्यादिरन्वयबोधः । दूरान्तिकशब्देभ्यो वैकल्पिकीं पञ्चमीं ज्ञापयति । "दूरान्तिकार्थेभ्यो द्वितीया चे"ति सूत्रं दूरान्तिकार्थकशब्देभ्यो द्वितीया भवति चकारात्तृतीया पञ्चमी च समुच्चीयत इत्यर्थकं ग्रामस्य ग्रामाद्वा अन्तिकमन्तिकेनान्तिकाद्वा सविधं सविधेन सविधाद्वा इत्यादौ दर्शित एवान्वयबोधः दूरान्तिकशब्देभ्यः सप्तम्यपि भवति तत्रानुशासनं दर्शयिष्यते तेन ग्रामस्य ग्रामाद्वा दूरे विप्रकृष्टे वा सविधे अन्तिके वा इति प्रयोगः अत्र दूरान्तिकार्थकशब्दप्रकृतिकानां द्वितीयातृतीयापञ्चमीसप्तमीनां प्रातिपदिकार्थमात्रे विधानमिति शाब्दिकाः । "दूरेण तं परिहरन्ति सदैव रोगा" इत्यत्र दूरादावसथान्मूत्रमित्यत्र च तृतीयापञ्चम्योरधिकरणार्थकत्वं दृश्यते तस्मादिदमवगम्यते यत्र दूरादिपदार्थानामितरस्मिन् विशेषणतयाऽन्वयस्त-

च प्रातिपदिकार्थमात्रे द्वितीयादयो विभक्तय इति। भवाप्यसत्त्ववचनस्येत्यनुवर्तते तेन शब्दान्तरसमानाधिकरणाद्दूरादिशब्दाद्विशेषणविभक्तिर्भवति यथा दूरः पन्था दूराय पथे स्पृहयति। वैधर्म्यार्थयोगे पञ्चमीं ज्ञापयति। "पञ्चमी विभक्ते" इति सूत्रम्। निर्धारणाश्रये विभक्ते सति यतो विभागस्ततः पञ्चमी भवतीत्यर्थकं षष्ठीसप्तम्योरपवादः विभागो वैधर्म्यं तच्च सजातीयावधिकोत्कर्षापकर्षस्वरूपं निर्धारणं तु सामान्यधर्मावच्छेदेन कस्यचिद्व्यक्तिवैधर्म्यं विभागस्त्वन्वयितावच्छेदकावच्छिन्नवैधर्म्यमिति विशेषः पाटलिपुत्रेभ्य आढ्यतरा माथुरा इत्यत्राढ्यतरत्वमधिकसंख्यकधनवत्त्वं पञ्चम्यास्तु भेदप्रतियोगितावच्छेदकत्वमर्थस्तच्चापरशब्दार्थतावच्छेदकेऽन्वयितावच्छेदकेऽन्वेति भेदे च प्रकृत्यर्थस्य धनावच्छिन्नाधिकरणतानिरूपिताधेयतयाऽन्वयस्तथा च धनवत्पाटलिपुत्रवृत्तिभेदप्रतियोगितावच्छेदकाढ्यतरत्ववदभिन्ना माथुरा इत्यन्वयबोधः यादृशधर्मेऽन्वयितावच्छेदके भेदप्रतियोगितावच्छेदकत्वस्यान्वयस्तत्सजातीयधर्मावच्छिन्नाधिकरणतानिरूपिताधेयतया प्रकृत्यर्थस्य भेदेऽन्वयो विवक्षितः साजात्यं चान्वयितावच्छेदकघटकतावच्छेदकरूपेण बोध्यं प्रकृते तु तादृशं रूपं धनवत्त्वमेव अतो वृद्धेभ्यो दरिद्रेभ्यो वा आढ्यतरा माथुरा इति न प्रयोगः। यत्तु "वैश्येभ्यः क्षत्रियाः शूराः शूद्रेभ्यो धनिनो विप्र" इत्यादौ शौर्यसंख्यानिष्ठभेदप्रतियोगितावच्छेदकजातिमत्संख्यावत्त्वं धनसंख्यानिष्ठभेदप्रतियोगितावच्छेदकजातिमत्संख्यावत्त्वं च पञ्चम्यर्थः शूरपदा-

र्थतावच्छेदके शौर्ये धनिशब्दार्थतावच्छेदके धने यथा-योग्यमन्वेति पञ्चम्यर्थैकदेशे शौर्ये धने प्रकृत्यर्थस्याऽन्व-यस्तथा च वैश्यशौर्यसंख्यानिष्ठभेदप्रतियोगितावच्छेद-कजातिमत्संख्यावच्छौर्यवद्भिन्नाः क्षत्रिया इत्यादिर-न्वयबोध इति तन्न शोभनं शौर्यधनादेः पञ्चम्यर्थेऽनुप्र-वेशे पञ्चम्यर्थस्याननुगमापत्तेः यत्रैकैकमेव धनमुत्कृष्टा-पकृष्टं तत्रास्मादसौ धनिक इत्यादिप्रयोगानुपपत्तेश्च धनिकत्त्वमतिशयितधनवत्त्वमतिशयो बहुमूल्यता च उ-भयथाऽप्यतिशयितधनवत्त्वं धनिनिष्ठभेदप्रतियोगिताव-च्छेदकमिति दर्शितपक्षे न काऽप्यनुपपत्तिरिति। अस्मा-दस्माद्दीर्घ इत्यत्र दीर्घत्वं परिमाणविशेषः तस्य ह्रस्व-परिमाणवदिदंपदार्थनिष्ठभेदप्रतियोगितावच्छेदकत्वम-क्षतमेव एवमस्माद्ध्रस्व इत्यत्र ह्रस्वत्व परिमाणवि-शेषस्तस्यापि दीर्घावधिकत्वं दर्शितप्रायमिति । अय-मस्मात्तारो मन्द्रो इत्यत्र सजातीयसाक्षात्कारस्य प्रति-बन्धकतावच्छेदकजातिमत्त्वं तारत्वं प्रतिबध्यतावच्छे-दकजातिमत्त्वं मन्द्रत्वमित्यन्यत्र विस्तरस्तारत्वं मन्द्र-निष्ठस्य मन्द्रत्वं तारनिष्ठस्य प्रतियोगितावच्छेदक-मिति नानुपपत्तिः श्वपाकाद्यवनो नीच इत्यत्र नी-चत्वं वेदनिषिध्यतावच्छेदकत्वोपलक्षितधर्मविशिष्टक-र्मकर्तृत्वं तादृशधर्मविशिष्टस्य गोहननादेरतिशयित-नरकप्रयोजकस्य कर्तृत्वं यवननिष्ठं तादृशधर्मविशि-ष्टश्वपचादिनरकप्रयोजककर्मकर्तृश्वपाकवृत्त्यन्योन्याभा-वप्रतियोगितावच्छेदकमिति नीचपर्याय इतरशब्दोऽध-मशब्दश्चेति । तस्मादयमधिक इत्यत्राधिकत्वमधिकसं-ख्यावत्त्वं न्यूनसंख्यावद्वृत्तिभेदप्रतियोगितावच्छेदकमि-

ति संख्याया आधिक्यं स्वान्यसंख्याव्याप्यत्वं न्यूनत्वं तु स्वान्यसंख्याव्यापकत्वं दशत्वव्याप्यं शतत्वं न तु दशत्वं तद्व्याप्यं दशमात्रे व्यभिचारादिति शतत्वमधिकं शतत्वव्यापकं दशत्वमिति तन्न्यूनमिति अधिकसंख्या क्व चिदवयवगता यथा गुञ्जाया अधिको यवः क्व चिन्मूल्यगता यथा रजतादधिकं हिरण्यं क्व चित्पुण्यगता यथा पितुरधिको युधिष्ठिरः क्व चिद्विद्यागता यथा वैशम्पायनादधिको व्यासः क्व चिद्गुणगता यथा तेजसोऽधिके क्षितिपाथसी एवमन्यत्राप्यूहनीयम् । तस्मात्स्थूलः कृशो वेत्यत्र दीर्घत्वह्रस्वत्ववदन्वयो बोध्यः एवमन्यत्रापि विभक्तपञ्चम्यर्थान्वयो बोध्यः । के चित्तु तस्मादयं दीर्घ इत्यादौ पञ्चम्यर्थस्यावधिमत्त्वस्यापादानरूपस्य दीर्घादिनामार्थेऽन्वयाव्युत्पत्तेः भवतीतिक्रियाध्याहार इति वदन्ति । तदसत् कारकेऽपादानत्वस्वरूपस्य दर्शितत्वात् विभक्तपञ्चम्याः तदर्थकत्वविरहात् भवतीत्यध्याहारेऽपि भवत्यर्थयोरुत्पत्तिसत्तयोर्निरवधित्वेनानन्वयापत्तेश्च । किं चावधित्वमपि नैकं यतः विभागनिरूपकोऽवधिर्न परत्वपृथक्त्वादिनिरूपक इत्यास्तां विस्तरः । काशिकावृत्तौ निर्धारणाश्रये यस्मिन् विभक्तमस्ति ततः पञ्चमी भवतीति व्याख्यातं तदनुरोधेन प्रकृतेऽपि तथा व्याख्यातं निर्धारणं तु विशिष्य वक्ष्यते । यदि च नागरिकेषु पाटलिपुत्रेभ्य आढ्यतरा माथुरा इति नरेषु क्षत्रिया वैश्येभ्यः शूरा इति च प्रयोगस्तदा वृत्तौ निर्धारणाश्रय इत्युपादानं युक्तमेवेति ।

इत्यकारकपञ्चम्यर्थनिर्णयः ।

इति विभक्त्यर्थनिर्णये पञ्चमीविवरणं समाप्तम् ।

॥ अथ षष्ठी ॥

ङस्ङोस्आमिति त्रयः प्रत्ययास्तत्र ङकारोऽनु-
बन्धः क्वचिदप्यश्रूयमाणत्वान्न वाचकताकुक्षिप्रविष्ट
इति सुमनसः सौकुमार्यं सुमनसोः सौरभ्यं सुमनसां
मार्दवमित्यादौ श्रूयमाणत्वादसन्तत्वेन ओस ओस्त्वेन
आम आन्त्वेन वाचकत्वमनुशासनसिद्धः षष्ठ्यर्थः ।
अनुशासनं च "षष्ठी शेषे" इति उक्तेभ्यः कर्मादिभ्यः
प्रातिपदिकार्थादिभ्यश्च भिन्नः शेषः । काशिकाकृतस्तु
यच्चाप्रधानं तच्छेषशब्देनोच्यते तदुभयत्र पर्यायेण वा
षष्ठी भवतीत्याहुः । तत्र शेषस्तावद्भिन्नत्वेन अप्रधान-
मपि तत्त्वेन न षष्ठीवाच्यं किं तु शेषत्वेन शेषत्वं स-
म्बन्धत्वं सप्रतियोगिकत्वे सति सानुयोगिकत्वं प्रति-
योगित्वानुयोगित्वनिरूपकतावच्छेदकधर्मवैशिष्ट्यमिति
यावत् एकशतं षष्ठ्यर्था इति महाभाष्यपरिगणितमपि
न प्रवृत्तिनिमित्तानामनेकविधत्वं ज्ञापयति किं तु शे-
षव्यक्तीनां सम्भवति शक्त्यैक्ये अनन्तशक्तिकल्पनाया अ-
न्याय्यत्वात् दर्शितधर्मवान् शेषः संयोगसमवायस्वत्व-
कर्तृत्वादिकारकविषयत्वादिभेदादनेकविधः हिमानां
गिरिः गजस्यालानं वल्लिकाया स्तम्भ इत्यादौ षष्ठ्यर्थः
संयोगस्तत्र प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः पुरुषस्य द-
ण्डः कर्णस्यावतंसः हृदयस्य हार इत्यादौ षष्ठ्यर्थसंयोगे
प्रकृत्यर्थस्यानुयोगितयाऽन्वयः । हिमप्रतियोगिकसंयोग-
वान् गिरिरित्यादिरन्वयबोधः । पुरुषानुयोगिकसंयो-
गवान् दण्ड इत्यादिरन्वयबोधः । वृक्षस्य शाखेत्यादौ
समवायः षष्ठ्यर्थस्तत्र प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः ।

वृत्तप्रतियोगिकसमवायवती शाखेत्यन्वयबोधः । पटस्य नीलमित्यादौ समवेतत्वं षष्ठ्यर्थस्तत्र प्रकृत्यर्थस्य निरूपितत्वेनान्वयः पटनिरूपितसमवेतत्ववान्नीलमित्यन्वयबोधः । राज्ञः पुरुष इत्यादौ स्वत्वं षष्ठ्यर्थस्तत्र निरूपितत्वेनान्वयः राजनिरूपितस्वत्ववान् पुरुष इत्यन्वयबोधः । पुरुषाणां राजा चित्राणां गवामयं नन्दनाणां भ्रमीत्यादौ स्वामित्वं षष्ठ्यर्थस्तत्र निरूपितत्वेन प्रकृत्यर्थस्यान्वयः पुरुषनिरूपितस्वामित्ववान्राजेत्यादिरन्वयबोधः सतां गतमित्यादौ कर्तृत्वं षष्ठ्यर्थस्तत्राधेयतया प्रकृत्यर्थस्यान्वयः । ओदनस्य पक्तेत्यत्र कर्मत्वं षष्ठ्यर्थस्तत्र निरूपितत्वेन प्रकृत्यर्थस्यान्वयः फलानां तृप्तः पयसामभिषिक्त इत्यादौ करणत्वं व्यापारः षष्ठ्यर्थस्तत्र प्रयोज्यतया प्रकृत्यर्थस्यान्वयः ब्राह्मणस्य दानमित्यादौ संप्रदानत्वं स्वत्वोद्देश्यताया अवच्छेदकत्वस्वरूपं षष्ठ्यर्थस्तत्राधेयतया प्रकृत्यर्थस्यान्वयः कान्तस्य त्रस्यतीत्यादौ दर्शितभयहेतुत्वस्वरूपमपादानत्वं षष्ठ्यर्थस्तत्राधेयतया निरूपकतया वा प्रकृत्यर्थस्यान्वयः । पाकस्य गृहमित्यादावधिकरणत्वं पीठस्योपवेशनमित्यादावाधेयत्वस्वरूपमधिकरणत्वं षष्ठ्यर्थस्तत्र निरूपकतया प्रकृत्यर्थस्यान्वयः शास्त्रस्य ज्ञातेत्यादौ विषयत्वं षष्ठ्यर्थः भ्रमस्य रजतमित्यादौ विषयत्वं षष्ठ्यर्थस्तत्र निरूपकतया प्रकृत्यर्थस्यान्वयः अस्य पिता अस्य पुत्र इत्यादौ जनकत्वं जन्यत्वं षष्ठ्यर्थस्तत्र प्रकृत्यर्थस्य निरूपकतयाऽन्वयः यदि च पितृत्वादिकं जनकत्वादिघटितं तदा निरूपकत्वं षष्ठ्यर्थस्तत्र प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः । ए-

वमन्याहुर्णोऽपि शेषो बोध्यः । करणेऽर्थे षष्ठीं ज्ञापयति । "ज्ञोऽविदर्थस्य करणे" इति सूत्रम् । जानातेरविदर्थस्य करणे कारके षष्ठी विभक्तिर्भवतीत्यर्थकम् । अविदज्ञानभिन्नमथ वाऽज्ञानं मोहो मिथ्याज्ञानमिति यावत् ज्ञानभिन्नप्रवृत्तिरूपोऽर्थो बोध्यः । तथा हि काशिका प्रवृत्तिवचनो जानातिरविदर्थो भवति अथ वा मिथ्याज्ञानवचन इति सर्पिषो जानीत इत्यत्र षष्ठ्याः स्वजन्यं स्वविषयकप्रत्यक्षं व्यापारः करणत्वमर्थः प्रयोज्यतया प्रवृत्तिरूपे धात्वर्थेऽन्वेति । मिथ्याज्ञानरूपे धात्वर्थे तु षष्ठ्या लयो व्यापारोऽर्थः लयस्तु तथाविधं धाराऽऽपन्नं प्रत्यक्षं तज्जन्यदृढसंस्कारजन्यं स्मरणं वा तथा च सर्पिःप्रत्यक्षप्रयोज्यप्रवृत्त्याश्रयत्वं वाक्यार्थः । अथ वा सर्पिर्लयप्रयोज्यं सर्पिस्तादात्म्यावगाहिसकलवस्तुविषयकं यन्मिथ्याज्ञानं तदाश्रयत्वं वाक्यार्थः । यो यद्विषयकलयवान्स तन्मयं जगत्पश्यतीति । एवं मधुनो जानीत इत्यादावप्यनया रीत्याऽन्वयो बोध्यः । अधीगादिकर्मणि षष्ठीं ज्ञापयति । "अधीगर्थदयेशां कर्मणि" इति सूत्रम् । अधिपूर्वकस्येङ्धातोः स्मरणमर्थस्तदर्था ये धातवस्तेषां दयधातोरीशधातोश्च कर्मणि षष्ठी विभक्तिर्भवतीत्यर्थकं मातुरध्येति स्मरति चिन्तयति वेत्यादौ षष्ठ्या भाषेयत्वस्वरूपं कर्मत्वमर्थः फले विषयत्वेऽन्वेति । मातृवृत्तिविषयताप्रतियोगिस्मरणाश्रयत्वं वाक्यार्थः । दय दानगतिरक्षणेषु इति दयतेस्त्रयोऽर्थाः तेषां कर्मणि षष्ठी तत्र दाने यथा सर्पिषो मधुनो वा दयत इत्यत्र सर्पिष्कर्मकं मधुकर्मकं वा यद्दानं तदाश्रय-

त्वं वाक्यार्थः । गतौ यथा तीर्थस्य दयते इत्यत्र तीर्थकर्मकगमनाश्रयत्वं वाक्यार्थः । रक्षणे यथा दीनस्य दयते इत्यत्र दीनकर्मकरक्षणाश्रयत्वं वाक्यार्थः । ईश ऐश्वर्ये इतीशधातोरैश्वर्यमर्थस्तच्च स्वत्वफलनिरूपकं स्वामित्वमैश्वर्यकर्मणि षष्ठी यथा सर्पिष ईष्टे इत्यत्र सर्पिर्वृत्तिस्वत्वनिरूपकत्वाश्रयत्वं वाक्यार्थः । एवं ग्रामस्य देशस्य नगरस्य पौरस्य वा ईष्टे इत्य दावप्यनया रीत्याऽन्वयो बोध्यः । कृञः कर्मणि षष्ठीं ज्ञापयति । "कृञः प्रतियत्ने" इति सूत्रम् । कृञः कर्मणि षष्ठी विभक्तिर्भवति प्रतियत्ने गम्यमाने इत्यर्थकं सतो गुणान्तराधानम्प्रतियत्न इति काशिका । एधोदकस्योपस्कुरुते पाचक इत्यत्र षष्ठ्याः कर्मत्वमर्थो धात्वर्थ उपकरणेऽन्वेति उपकरणं संन्निधापनं तथा चैधोदककर्मसंनिधापनप्रयत्नाश्रयः पाचक इत्यन्वयबोधः । तदनन्तरं सतः पाकस्य क्षिप्रसम्पत्तिरूपगुणाधायकमेधोदकसन्निधापनमिति वैयञ्जनिको बोध इति वृत्तिस्वरसादवगम्यते । वस्तुतस्तु प्रतियत्नो द्वितीययत्नः स चोपकारस्वरूप उपपूर्वकस्य करोतेरर्थस्तत्कर्मणि षष्ठी विभक्तिर्भवतीति सूत्रार्थः । अत एव उपात्प्रतियत्नेति सूत्रेण विहितस्य सुट आगमत्वान्निरर्थकस्य धात्वर्थप्रतियत्नद्योतकत्वमुक्तम् । उपकारश्च द्विविधः उप समीपे करणं स्थापनं सन्निधापनमिति यावत् । इत्येक एतस्यैव प्रतियत्नस्य द्योतकः सुडागमः । द्वितीयस्तु दुःखनाशसुखान्यतरानुकूलव्यापारस्वरूप एतस्मिन्प्रतियत्ने विवक्षिते न सुडागमः आद्यो यथा एधोदकस्योपस्कुरुते पाचकः इत्यत्रान्वयबोधः पूर्ववदेव । द्विती-

यो यथा दीनस्योपकुरुते कारुणिक इत्यादौ षष्ठ्या आधेयत्वस्वरूपं कर्मत्वं दुःखनाशादौ फलेऽन्वेति तथा च दीनवृत्तिदुःखनाशानुकूलप्रयत्नाश्रयः कारुणिक इत्यन्वयबोधः क्व चित्प्रतिक्रियाऽपि प्रतियत्नः प्रतिक्रिया च क्रियाविघातकक्रिया सा च प्रतिपूर्वकस्य करोतेरर्थः। तत्कर्मण्यपि षष्ठी यथा "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक्स्वभेषजैः" इत्यादौ प्रतिक्रिया क्रियाऽभिघातकक्रिया धात्वर्थस्तत्र गुर्वादिकर्मत्वस्य षष्ठ्यन्तार्थस्यान्वय इति क्रियाविशेषणस्य कर्मत्वादुपक्रियाविशेषणेऽपि षष्ठी यथा स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोतीत्यादौ अत्र स्वात्मसाक्षात्काराभिन्नोपकारप्रयत्नाश्रयः स इत्यन्वयबोधः। रुजार्थानां कर्मणि षष्ठीं ज्ञापयति। "रुजार्थानां भाववचनानामज्वरेः" इति सूत्रं भाववचनानां भावकर्तृकाणां रुजार्थानां ज्वरिवर्जितानां कर्मणि षष्ठी विभक्तिर्भवतीत्यर्थकं चौरस्य रुजति रोग इत्यादौ रुजेर्दुःखानुकूलव्यापारोऽर्थः तिङः प्रयोजकत्वमर्थः षष्ठ्या आधेयत्वस्वरूपं कर्मत्वमर्थः पित्तादिविकारो रोगः तथा च चौरवृत्तिदुःखानुकूलधातुविकारस्वरूपव्यापारप्रयोजकः पित्तादिविकार इत्यन्वबोधः। एवं चौरस्यामयस्यामय इत्यादावप्यन्वयो बोध्यः रुजार्थानामित्युपादानात् "एति जीविनमानन्दो नरं वर्षशतादपि इत्यादौ कर्मणि न षष्ठी भाववचनानामित्युपादानात् नदीकूलानि रुजतीत्यादौ कर्मणि न षष्ठी अत्र रुजेर्नाशानुकूलो व्यापारोऽर्थः अज्वरेरित्युपादानात् चौरं ज्वरयति रोग इत्यादौ

कर्मणि न षष्ठी "अज्वरिसंताप्योरिति वक्तव्यमि"ति वार्तिकात् चौरं सन्तापयति सन्ताप इत्यादौ कर्मणि न षष्ठी अत्र धातोर्दुःखानुकूल औष्ण्यानुभवार्थः सन्तापशब्दस्योद्भूतस्पर्शवत्तेजःसंयोगोऽर्थ इति । एवं भोक्तृ रुजति बहुभोजनं कामुकस्य क्षयिष्यत्यनवरतरतमित्यादिको भावकर्तृकरुजर्थप्रयोगोऽपीष्ट एवेति । नाथतेः कर्मणि षष्ठीं ज्ञापयति "आशिषि नाथ" इति सूत्रम् । आशीरर्थे वर्तमानस्य नाथतेः कर्मणि षष्ठी विभक्तिर्भवतीत्यर्थकम् । आशीराशंसा लिप्सेति यावत् सर्पिषो नाथते इत्यादौ षष्ठ्या आधेयत्वस्वरूपं कर्मत्वमर्थः तच्च धात्वर्थेच्छाफले विषयत्व उद्देश्यत्वे वाऽन्वेति तथा च सर्पिर्वृत्तिविषयताकेच्छाश्रयत्वं वाक्यार्थः । आशिषीत्युपादानात् माणवकमुपनाथतीत्यादौ कर्मणि न षष्ठी अत्र नाथतेरुपतापोऽर्थः नाथृ नाधृ याच्ञोपतापैश्वर्याशीःष्वित्यभिधानात् । हिंसार्थकानां कतिपयधातूनां कर्मणि षष्ठीं ज्ञापयति । "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" इति सूत्रम् । जासिनिप्रहणनाटक्राथपिष इत्येतेषां धातूनां हिंसार्थकानां कर्मणि षष्ठी भवतीत्यर्थकं प्राणात्यन्तवियोगफलकव्यापारो हिंसा तदर्थका एते धातवस्तथा हि उत्पूर्वकस्य प्रणिपूर्वकस्य निपूर्वकस्य प्रपूर्वकस्य च हन्तेरुत्पूर्वकस्य नाटेः क्राथतेः पिषेश्च हिंसार्थः । चौरस्योज्जासयति निप्रहन्ति प्रणिहन्ति निहन्ति प्रहन्ति उन्नाटयति उत्क्राथयति पिनष्टि वेत्यादौ षष्ठ्या आधेयत्वस्वरूपं कर्मत्वमर्थस्तच्च हिंसाफले प्राणात्यन्तवियोगेऽन्वेति तथा च चौरवृत्तिप्राणात्यन्तवि-

योगफलकव्यापाराश्रयत्वं वाक्यार्थः हिंसायामित्युपादानात् । धानाः पिनष्टीत्यत्र कर्मणि न षष्ठी आरम्भकसंयोगनाशफलिकाऽऽरम्भसंयोगफलिका च पार्थिवक्रिया विजातीया पिनष्टेरर्थस्तत्राद्यं फलमादाय माषं पिनष्टीतिप्रयोगः द्वितीयं फलमादाय धानाः पिनष्टीतिप्रयोगः । व्यवहृपणोः कर्मणि षष्ठीं ज्ञापयति । "व्यवहृपणोः समर्थयोः" इति सूत्रम् । व्यवहृपण इत्येतयोर्धात्वोः समर्थयोः समानार्थयोः कर्मणि षष्ठी भवतीत्यर्थकं द्यूते क्रयविक्रयव्यवहारे चानयोर्धात्वोः तुल्यार्थता शतस्य व्यवहरते पणते वा इत्यादौ द्यूतं क्रयो विक्रयश्च व्यवहरते पणतेश्चार्थः त्यागलाभान्यतरफलकाक्षपातनादिव्यापारो द्यूतं त्यागे स्वत्वनाशप्रकारतानिरूपितविशेष्यत्वस्य तत्संबन्धावच्छिन्नाधेयत्वस्य वा कर्मत्वस्यान्वयः लाभः स्वत्वेच्छा तत्र स्वत्वप्रकारतानिरूपितविशेष्यत्वस्य तत्संबन्धावच्छिन्नाधेयत्वस्य वा कर्मत्वस्यान्वयस्तथा च शतकर्मताकत्यागस्य शतकर्मताकस्य लाभस्य वा फलकं यदक्षपातनादिकं तदनुकूलकृतिर्वाक्यार्थः क्रयो विक्रयश्च प्रागेव निरुक्तस्तत्र कर्मत्वान्वयोऽपि दर्शित एवेति शतकर्मताकक्रयकर्तृत्वं शतकर्मताकविक्रयकर्तृत्वं च वाक्यार्थः समर्थयोरित्युपादानात् । शलाकां व्यवहरतीत्यादौ कर्मणि न षष्ठी व्यवहरतेर्गणनाऽर्थकत्वात् । तथा च शलाकाकर्मताकपरिगणनकर्तृत्वं वाक्यार्थः । एवं ब्राह्मणं पणायतीत्यादावपि कर्मणि न षष्ठी पणते स्तुत्यर्थकत्वात् अत एवायप्रत्ययः "स्तुत्यर्थस्य प-

चतेरायप्रत्यय इष्यते"इति वार्तिकात् तथा च व्रा-ह्मणकर्मताकस्तुतिकर्तृत्वं वाक्यार्थ इति । अधिकरणे काले षष्ठीं ज्ञापयति । "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इति सूत्रं कृत्वोऽर्थानां प्रत्ययानां प्रयोगे सति कालरूपेऽधिकरणेऽर्थे षष्ठी विभक्तिर्भवतीत्यर्थकं काले इत्यस्य कालवाचिशब्दादित्यर्थस्तथा च कालविशेषवाचिशब्दादधिकरणेऽर्थे षष्ठी भवतीतिसूत्रार्थः । पञ्चकृत्वोऽह्नो भुङ्क्ते इत्यादौ क्रियाभ्यावृत्तिगणने विहितस्य कृत्वसुच्-प्रत्ययस्याभ्यावृत्तिमात्रमर्थोऽनन्यलभ्यत्वात् क्रियाया धातुना गणनस्य संख्यार्थकशब्देन लाभात् अभ्यावृत्तिः पौनःपुन्यमुत्पत्तिरिति यावत् । अत एव काशिकायामेककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्म संख्यानं क्रियाभ्यावृत्तिगणनमिति व्याख्यातं तत्रोत्पत्तौ तद्धितार्थे पञ्चशब्दार्थस्य पञ्चत्वसंख्याविशिष्टस्य द्विशब्दार्थस्य द्वित्वविशिष्टस्य प्रतियोगितयाऽन्वयः पञ्चान्वितोत्पत्तेः धात्वर्थताऽवच्छेदकैकधर्मावच्छिन्नसमानाधिकरणभूते धात्वर्थे प्रतियोगितयाऽन्वयः तत एव क्रियाजन्मसंख्यानलाभः धात्वर्थताऽवच्छेदकैकधर्मावच्छिन्नत्वनिवेशात् चैत्रस्य त्रिर्भोजने द्विर्गमने सति चैत्रः पञ्चकृत्वो भुङ्क्ते गच्छति वेति न प्रयोगः सामानाधिकरण्यनिवेशात् चैत्रस्य त्रिर्भोजने मैत्रस्य द्विर्भोजने सति चैत्रो मैत्रो वा पञ्चकृत्वो भुङ्क्ते इति न प्रयोग इति प्रकृत्यर्थविशेषितेन कृत्वोर्थप्रत्ययार्थेन विशेषिते धात्वर्थे प्रकृत्यर्थकालविशेषविशेषितस्य षष्ठ्यर्थस्याधेयत्वस्यान्वयः तथा च पञ्चप्रतियोगितानिरूपकोत्पत्तिप्रतियोग्यवृत्तिभोजनक-

टं त्वं वाक्यार्थः। व्युत्पत्तिवैचित्र्येण समानाधिकरणे एकधर्मावच्छिन्ने धात्वर्थे क्त्वोऽर्थप्रत्ययार्थस्योत्पत्तेरन्वयः क्त्वाऽर्थप्रत्ययार्थविशिष्टे धात्वर्थे षष्ठ्यर्थस्याधेयत्वस्यापि व्युत्पत्तिवैचित्र्येणान्वयः। अत एव क्त्वाऽर्थप्रयोगोपादानं संगच्छते तदुपादानफलं तु क्त्वोऽर्थप्रत्ययप्रयोगशून्ये अन्हि भुङ्क्ते शेते वेत्यादौ कालेऽधिकरणे न षष्ठी। शाब्दिकास्तु ज्ञोऽविदर्थस्येतिसूत्रेण करणे धौगर्थेत्यादिना व्यवहृपणोरित्यन्तेन सूत्रषट्केन कर्मणि क्त्वोऽर्थेतिसूत्रेणाधिकरणे कारके यत्षष्ठीविधानं तच्छेषत्वेन विवक्षिते बोध्यं "षष्ठी शेष" इत्यतः शेष इत्यस्यानुवृत्तेर्जागरूकत्वात् न चैवं "षष्ठी शेषे" इत्यनेन षष्ठ्यां सिद्धायां दर्शिताष्टसूत्रीप्रणयनं व्यर्थमिति वाच्यम्। सर्पिषो ज्ञानमित्यादौ समासनिषेधफलकतया तत्सार्थक्यात्। न च दर्शिताष्टसूत्र्या न समासनिवृत्तिफलकत्वं किं तु समासे षष्ठीलुग्निवृत्तिफलकत्वं तत एव सार्थक्यसंभवादिति वाच्यम्। अलुक्समासे प्रमाणाभावात् समासनिषेधफलकत्वस्यानुशासनिकस्यौचित्यात् तथा च वार्तिकं "प्रतिपदविधाना षष्ठी न समस्यत" इति। हरिरप्याह।

> कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
> प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥

इति प्रतिपदमित्यत्र प्रतियोगे इत्थंभावाख्याने द्वितीया संबन्धमभिधत्ते तथा च पदसंबन्धिनी षष्ठी कारकव्यपदेशवती श्रूयमाणक्रिये सूत्रे प्रोक्ता समासनिवृत्त्यर्थेत्यन्वयबोधः। पदसंबन्धस्तु कारकविशेषसंबन्धेन धातुविशेषसंबन्धी बोध्यः। इत्थं च सर्पिषो ज्ञानं मा-

तुः स्मरणमित्यादिकः प्रयोगः शेषत्वविवक्षायामसमस्त एव साधुः । हरिस्मरणमित्यादिसमासस्तु शेषत्वाविवक्षायां कृद्योगषष्ठ्या बोध्यस्तत्र कारकपूर्वकत्वात् । गतिकारकेत्यादिना विहितः कृदुत्तरपदप्रकृतिस्वरो मध्योदात्तो भवति शेषषष्ठ्या समासोपगमे त्वन्तोदात्तस्तत्पुरुषस्वरः स्यादिति स्वरार्थंयमष्टमूचीति निर्गलितार्थः । किं च मातुः स्मृतमित्यादौ समासाभावोऽष्टसूत्या ज्ञाप्यते कृद्योगप्रयुक्तकर्मषष्ठ्या निष्ठायां निषेधात् कर्मविषया षष्ठी निष्ठायां प्रतिषिध्यत इत्युक्तेः शेषषष्ठ्या समासस्तु दर्शिताष्टमूचीज्ञाप्यनिषेधस्य विषय एवेति वदन्ति । अत्रेदं चिन्त्यं हरिस्मरणमित्यादौ कृदुत्तरपदप्रकृतिस्वरो मध्योदात्तो नान्तोदात्तः शेषषष्ठीतत्पुरुषस्वर इति नायं शेषषष्ठीतत्पुरुष इति तु तदैव संगच्छते यदि च सुगन्धिं पुष्टिवर्द्धनमित्यादिवेदे कारकस्य शेषत्वविवक्षायां पुष्टिवर्द्धनशब्दस्य शेषषष्ठीतत्पुरुषसमासोपगमेऽन्तोदात्तस्वर उपलभ्येत नायं दृष्टचर इति न किञ्चिदेतत् मातुः स्मृतमित्यादावपि न शेषषष्ठ्या निषेधः न लोकेतिनिषेधस्य "नपुंसके भावे उपसंख्यानमि"तिवार्त्तिकेन प्रतिप्रसवात् । न च कर्मषष्ठ्या निष्ठायां निषेध इति वाच्यं निष्ठायां निषेधस्याप्रामाणिकत्वात् प्रामाणिकत्वे तु क्तवतुमात्रविषयत्वात् । अत एव ग्रामस्य गतमोदनस्य भुक्तमित्यादिको भावाधिकरणक्तान्ते कर्मविषयषष्ठीप्रयोगः प्रामाणिकानां संगच्छते । किं च दर्शिताष्टसूत्याः शेषषष्ठीसमासनिषेधफलकत्वाभ्युपगमे सुरेषिता जनेषिता

नदीश्रितेत्यादिकः षष्ठीसमासो न स्यात् कर्मषष्ठ्याः तृ-
णि न खोकेत्यनेन निषेधात् दर्शिताष्टमूल्या शेषषष्ठीस-
मासनिषेधस्य ज्ञापनादिति तस्मात्करणे कर्मणि अधि-
करणे तत्त्वेन विवक्षितेऽष्टमूल्या षष्ठी विधीयते न चैवं
कारकविभक्तिज्ञापकं विना स्वार्थकविभक्त्यन्तरबाधकत्व-
नियमात् दर्शितोदाहरणेषु तृतीयाद्वितीयासप्तमीनां
बाधप्रसङ्ग इति वाच्यम् । ईदृशनियमे मानाभावात् पु-
ष्पेभ्यः पुष्पं वा स्पृहेरर्थभेदेन चतुर्थीद्वितीययोरुपपत्तिरि-
ति वाच्यं प्रकृतेऽप्यर्थभेदसंभवात् । अतिशयितस्य द्विवि-
धाविदर्थस्य करणेऽतिशयितस्याध्यानस्य दयत्यर्थत्रितय-
स्येश्वरर्यस्य प्रतियत्नादेश्च तत्तत्सूत्रप्रदर्शितधात्वर्थस्य कर्मणि
षष्ठीविधानात् । अनतिशयितस्य तु करणे कर्मणि सा-
मान्यतस्तृतीयाद्वितीययोर्विधानात्कृत्वोऽर्थप्रयोगेऽधिक-
रणे कालिकसंबन्धावच्छिन्नाधेयत्वस्य विवक्षायां षष्ठी
विधानादाधेयत्वमात्रविवक्षायां सामान्यतः सप्तमीवि-
धानाद्दर्शिततत्तद्धातुप्रयोगे तृतीयाद्वितीयासप्तमीनामपि
नानुपपत्तिः । न चैवं दर्शितयोर्वार्त्तिकहरिकारिकयोर्वि-
रोधात् नैषा रीतिर्युक्तेति वाच्यं सूत्रविरोधापेक्षया
तयोर्विरोधस्याकिंचित्करत्वात् यदि च तयोरपि वि-
रोधो न युक्तः तदा तयोः कारकषष्ठ्याः समासनि-
षेधपरत्वमभ्युपेयम् अत एव हरिकारिकायां का-
रकैर्व्यपदिष्ट इत्यादिसार्थकं हरिस्मरणमित्यादि-
कः शेषषष्ठ्याः समासः अत एव जनेशितेत्यादि-
प्रयोगोपपत्तिः न चैवं स्वरविपर्ययापत्तिरिति वाच्यम् ।
दत्तोत्तरत्वात् कारकस्य कारकत्वशेषत्वोभयविवक्षायां

षष्ठीसमासयोः स्वरवैचित्र्यस्याहृष्टचरत्वादित्यलं विस्तरेण । दिवः कर्मणि षष्ठीं ज्ञापयति । "दिवस्तदर्थस्य" इति सूत्रम् । व्यवहृपणिसमानार्थकस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवतीत्यर्थकम् । शतस्य दीव्यतीत्यादौ षष्ठ्याः कर्मत्वमर्थस्तथा च शतकर्मताकद्यूतकर्तृत्वं पूर्ववत् वाक्यार्थः । यदि च क्रयविक्रयावपि दिवोऽर्थाविति तदा शतकर्मताकक्रयादिकर्तृत्वं वाक्यार्थः । यद्यपि पूर्वसूत्रे दिवः कथने पृथक्सूत्रप्रणयनं न भवतीति लाघवं संभवति तथाप्यग्रिमसूत्रेऽनुवृत्त्यर्थं पृथक्सूत्रारम्भ इति । सोपसर्गस्य दिवः कर्मणि वैकल्पिकीं षष्ठीं ज्ञापयति । "विभाषोपसर्गे" इति सूत्रम् । उपसर्गे सति दिवस्तदर्थस्य कर्मणि विभाषा षष्ठी विभक्तिर्भवतीत्यर्थकं शतस्य शतं वा प्रतिदीव्यतीत्यादौ षष्ठीद्वितीययोः कर्मत्वमर्थः । वाक्यार्थस्तु दर्शित एवेति उपसर्गे विभाषोपदेशात् निरुपसर्गस्य दिवोऽर्थस्य द्यूतादेरतिशयितस्यापि कर्मणि न द्वितीया किन्तु षष्ठ्येवेति प्रतीयते द्यूतादिभिन्नार्थकस्य दिवः सोपसर्गस्यापि कर्मणि द्वितीयैव न तु षष्ठी यथा शलाकां प्रतिदीव्यतीत्यादौ । निरुपसर्गस्य दिवः कर्मणि क्वचित्षष्ठ्यपवादं ज्ञापयति । द्वितीया ब्राह्मणे इति सूत्रं ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया विभक्तिर्भवतीत्यर्थकं ब्राह्मणः संहितेतरवेदभागो विप्रस्य आद्ये गामस्य तदहः सभायां दीव्येयुरिति अत्र निरुपसर्गस्य दिवस्तदर्थस्य कर्मणि द्वितीयाप्रयोगो ब्राह्मणभागान्तर्भूत एव अथ ब्राह्मणभागस्य सम्यगुच्चारणे न देवने गोः क-

मंत्वं प्रतीयते द्वितीये विप्रस्य गां दीव्यति विप्रो गां दीव्यतीत्यत्र द्वितीयया षष्ठ्यपवाद इति । तिङन्तविशेषस्य कर्मणि षष्ठीं ज्ञापयति । "प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने" इति सूत्रम् । प्रेष्यतेर्दिवादिकस्य लोण्मध्यमपुरुषैकवचनं प्रेष्य इति तस्याहचर्याद्ब्रुविरपि तथाभूत एव गृह्यते इति प्रेष्यब्रूहीत्येतयोः तिङन्तयोः कर्मणि हविषः षष्ठी भवति देवतायां संप्रदाने सतीत्यर्थकं हविषो हविर्वाचकशब्दादित्यर्थः । अग्नये छागस्य हविषो वपाया मेदसो वा प्रेष्य अग्नये छागस्य हविषो वपाया मेदसो वाऽनुब्रूहीत्यादौ प्रपूर्वकस्येष्यतेरनुपूर्वकस्य ब्रुवेश्च दानमर्थः षष्ठ्यास्तु कर्मत्वमर्थस्तथा चाग्निसंप्रदानताकच्छागकर्मताकांशाविषयदानकर्तृत्वांस्त्वमित्यादिरन्वयबोधः प्रेष्यब्रुवोरित्युपादानात् अग्नये छागं हविर्वपां मेदो वा जुहुधीत्यादौ धात्वन्तरकर्मणि न षष्ठी । हविष इत्युपादानादग्नये गोमयानि प्रेष्येत्यादौ कर्मणि न षष्ठी । देवतासंप्रदान इत्युपादानात् माणकाय पुरोडाशं प्रेष्येत्यादौ कर्मणि न षष्ठी । "हविषः प्रस्थितस्य प्रतिषेधो वक्तव्य" इति वार्तिकम् प्रस्थितशब्दसमानाधिकरणहविःशब्दात्षष्ठीं निषेधति । यथा इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्येत्यादौ प्रस्थितं प्रकर्षेण स्थितं प्रकर्षस्तु प्रोक्षणाभिमन्त्रणयथोक्तस्थानकत्वं बोध्यमिति । संप्रदानेऽर्थे षष्ठीं ज्ञापयति । चतुर्थ्यर्थे बहुलं छन्दसि इति सूत्रं छन्दसि चतुर्थ्यर्थे संप्रदानत्वादौ षष्ठी विभक्तिर्भवति बहुलमित्युपादानात् चतुर्थी क्व चि-

रषष्ठीनिषेधश्चेत्यर्थकम् । पुरुषस्त्वगश्चन्द्रमसश्चन्द्रमसे वा दातव्य इत्यादौ षष्ठीचतुर्थ्योः संप्रदानत्वमर्थः तथा च चन्द्रमसः संप्रदानताकाभीष्टकर्तव्यदानकर्म पुमान् स्रग इत्यन्वयबोधः । बहुलग्रहणात् कृष्णो रात्र्यै इत्यत्र न षष्ठी । कृष्णो मृगो बोध्यो दातव्य इत्यनुषज्यते रात्रिसंप्रदानत्वं चतुर्थ्यर्थः पूर्ववदन्वयबोधः । छन्दसीत्युपादानात् लोके चन्द्रमसेऽर्घं ददातीत्यादौ न षष्ठीति । करणे षष्ठीं ज्ञापयति । "यजेश्च करणे" इति सूत्रं यजधातोः करणे षष्ठी भवति छन्दसि प्रयोगे चकारात्तृतीयाऽपीत्यर्थकम् । यजेः कर्मणः करणसंज्ञाविधानात् कर्मण्येव षष्ठी । न चैवं यजेश्च कर्मणीत्येव सूत्रं स्यादिति वाच्यं यजेः संप्रदाने कर्मसंज्ञाविधानात् षष्ठ्याः संप्रदानार्थकताऽऽपत्तेः कर्मत्वार्थकताऽनुपपत्तेश्च । घृतस्य घृतेन वा यजते इत्यादौ यजेर्देवतोद्देश्यको वित्तर्ता वा त्यागोऽर्थः त्यागस्तु स्वत्वनाशानुकूलेच्छा षष्ठ्यास्तृतीयायाश्च स्वत्वनाशरूपफलान्वय्याधेयत्वरूपकर्मत्वमर्थस्तथा च घृतवृत्तिस्वत्वनाशानुकूलेच्छाश्रयत्वं वाक्यार्थः । छन्दसीत्यनुवृत्तेर्लोके घृतेन यजत इत्यादौ न षष्ठीति । कृद्योगे षष्ठीं ज्ञापयति । कर्तृकर्मणोः कृतीति सूत्रं कृत्प्रत्यययोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवतीत्यर्थकम् । भवत आसिका शायिका वा कृष्णस्य कृतिरित्यादौ षष्ठ्याः कर्तृत्वं तृतीयाया इवार्थस्तच्चासनशयनकरणेषु धात्वर्थेष्वन्वेति । ओदनस्य पाकः जगतः सृष्टिरित्यादौ षष्ठ्याः कर्मत्वं द्वितीयाया इवार्थः । तच्च पाकसर्गादौ धात्वर्थेऽन्वेति ।

ननु तिङो लादेशतया पर्युदासेऽर्थादेव कृद्योगलाभात् सूत्रे कृतीतिव्यर्थमिति चेत् न कृतपूर्वीकटमित्यादौ तद्धितयोगे षष्ठीवारणार्थं तदुपादानात् । अथ पूर्वं कृतमनेनेतिविग्रहे "सपूर्वाच्चे"तिसूत्रेण कर्तरि तद्धितेनिप्रत्ययो विधीयते । तत्र कृतपदस्य कटसामानाधिकरण्ये वृत्तिरेवानुपपन्ना ऋद्धस्य राजपुरुष इत्यादाविव "सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो ने"ति वार्तिकेन तन्निषेधात् । सूत्रे कृतीत्यस्यापि वैयर्थ्यं निष्ठाऽभिहिते कर्मणि षष्ठ्यप्रसक्तेः षष्ठ्यपवादेन कटमिति द्वितीयाऽप्यनुपपन्ना द्वितीयाषष्ठ्योः कारकार्थिकयोरनभिहिताधिकारीयत्वादिति चेत् । अत्र भाट्टाः । कारकाणां सर्वत्र प्रत्ययार्थभावनायामेवान्वयः न तु धात्वर्थे गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायात् । कर्मभावप्रत्ययाव्ययकृतोऽपि भावनामभिदधत्यन्यथा कारकान्वयानुपपत्तेः । कर्तृकृतां तु शक्त्या भक्त्या वा भावनाबोधकत्वमिति ग्रामं गतवानित्यादौ कर्तृभावनायां ग्रामकर्मत्वस्येव कृतपूर्वीकटमित्यादौ कर्तृवाचकतद्धितेनिप्रत्ययार्थभावनायां कटकर्मत्वस्यान्वयः कर्तृभावनाकर्मणो निष्ठयाऽभिधानेऽपि तद्धितार्थभावनाकर्मणोऽनभिधानान्न द्वितीयाऽनुपपत्तिः तथाच कृदुपात्ताया भावनायाः कर्मण्येव षष्ठी न तु तद्धितार्थभावनाया इत्यावेदयितुं सूत्रे कृतीतिनिर्दिष्टमिति । यदाह हरिः ।

ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ।
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ॥

क्रिया संबध्यते तद्वत् कृतपूर्व्यादिषु स्थिता।

कार्त्री कटंसम्बन्धेन क्रिया भावना तद्वता योगः तद्व-देकदेशभावनायामन्वयः अविग्रहा प्रधानकारका-न्वयिनीति तदर्थ इति वदन्ति। तच्चिन्त्यं कृतश-ब्दार्थस्य करणकर्मणास्तद्धितार्थभावनायामन्वये कटमिति द्वितीयान्तार्थस्यानन्वयापत्तेः एककर्मावरुद्धायां कर्मान्त-रान्वयस्यानाकाङ्क्षितत्वात्। किं च भावनायामेव कार-कान्वय इति न सम्भवति ओदनस्य पाकः इत्यादौ षष्ठ्य-र्थकर्मणोऽनन्वयप्रसङ्गात्। भावकृतां भावनाबोधकत्व-विरहात्। तथात्वाभ्युगमे तु कर्मकर्तृभावनाभ्यां कर्मक-र्त्रोराक्षेपेऽनभिहिताधिकारीययोः कर्मकर्तृषष्ठ्योरनुपप-त्तिप्रसङ्गात्। न चौदनस्य पाकः चैत्रस्य पाक इत्यादौ शेषषष्ठीव तद्योगषष्ठी कर्मकर्तृत्वं चोपेयत इति वाच्यम्। "उभयप्राप्तौ कर्मणी"ति सूत्रस्य निर्विषयक-त्वापत्तेः न च करणादिकृत् तद्विषय इति वाच्यम्। करणादिकृतोऽपि भावनाबोधकत्वस्य विरहात् कर्तृक-र्मणोरन्वयाप्रसक्त्या निर्विषयत्वतादवस्थ्यात् करणादि-भावनाया अतिरिक्ताया अप्यभ्युपगमे तत्रापि कर्तृक-र्मणोरन्वयासंभवात् निर्विषकत्वतादवस्थ्यात् यदि च गु-णानां चेतिन्यायेन भावनायां कारकत्वेनान्विते धात्व-र्थे न कारकान्वय इत्येवाभ्युपेयते न तु घञाद्यन्तेन प्रधानवदुपस्थापिते तस्मिन्निति तदा भवतु भावकृद-न्तार्थे षष्ठ्यर्थकारकान्वयः तावता न नः कापि क्षतिर-ति। ननु कृतपूर्वीकटमित्यादौ कृतशब्दार्थस्य करण-कर्मणस्तद्धितार्थभावनायामनन्वयेऽसामर्थ्यादि इत्यनु-

पपत्तिरन्वये तु तेनैव कर्माकाङ्क्षाविच्छित्तेः कटादेः कर्मतया तत्रान्वयासंभवः सूत्रे कृतीतित्यर्थं षष्ठ्यप्रसक्तेः कर्मणोऽभिधानात्। अत्रापि कटमिति द्वितीयाऽनुपपत्तिश्चेति चेत्। अत्र शाब्दिकाः। कृतमिति भावक्तान्तमविवक्षितकर्मकं पूर्वशब्देन समासमासाद्य कर्तृतद्धितस्य प्रकृतिर्भवतीति कृतपूर्वीशब्दस्त्रिद्धः प्राक्कालिककरणकर्त्तीतिशाब्दबोधमर्जयति तत्र भावक्तान्तकृञर्थे कटकर्मत्वस्यान्वय इति वदन्ति। अत्र गुरुचरणाः। भावक्तान्ते कर्मान्वयो न युज्यते। अविवक्षितकर्मण एव भावप्रत्ययाद् अन्यथा गतं गम्यते वेत्यादौ भावप्रत्ययान्ते ग्राममिति द्वितीयान्तार्थस्य ग्रामकर्मकत्वस्यान्वयप्रसङ्गात्। कर्मणो विवक्षायां भावप्रत्ययस्य विवक्षायां कर्मान्वयस्याव्युत्पन्नत्वात् किं च कृतपूर्वीत्यत्र कृञर्थे कर्मान्वयापगमे कृतीत्यनेन कथं कर्मषष्ठीवारणं निष्ठापर्युदासानुसरणे तु किं कृतीत्युपादानेन तस्मात्कृतपूर्वीत्यत्र कृतादिपदार्थपरित्यागेन तद्धितस्य प्राक्कालिकभावनावानर्थः। यदि च पक्कपूर्वी वेदानित्यादेः पर्यायत्वमाशङ्क्यते तदा पाकादिभावनावानेव तद्धितार्थः। तद्धितार्थैकदेशे पाकादौ षष्ठ्यर्थकर्मत्वान्वयवारणाय सूत्रे कृतीत्युपादानम्। ननु विग्रहे समासे च विवक्षितस्यापि निष्ठार्थस्य कर्तृतद्धितोत्पत्तौ सत्यां निष्ठाया अविवक्षाया निरर्थकत्वं युज्यते न तु धातोरतो धात्वर्थे तदुपहिततद्धितार्थभावनायां वा कर्मान्वयः सम्भवति तावतैव कृतीत्युपादानसार्थक्यं किं तद्धितानां पाकादिनानाभावनावदर्थकतया नानार्थताऽभ्युपगमेनेति

चेत् । नैवं यतो निष्ठाया निरर्थकत्वाभ्युपगमे ऽपि धातोः कृदन्तत्वमक्षतमिति षष्ठीप्रसक्तेर्दुर्वारतया सूत्रे कृतीत्युपादानमनर्थकमिति कृतीत्युपादानसामर्थ्यादेव क्तान्तं निरर्थकमवसीयत इति तद्धितेनिप्रत्ययस्य नानार्थकत्वमनन्यगतिकतयाऽभ्युपेयते क्तान्तन्तु प्रकारथाल्वत् तत्तद्भावनाद्यन्तमुपस्थापयति पक्वपूर्वीत्यत्र पाकानुकूलभावनावान् कृतपूर्वीत्यत्र करणभावनावान् प्रतीयते तत्र तद्धितार्थैकदेशे पाके भावनाया वौदनकर्मत्वस्य करणे भावनायां वा कटकर्मत्वस्य विवक्षायामोदनपदात्कटपदात्षष्ठीं वारयति सूत्रे कृतीति द्वितीया तु सामान्यतो विहिता भवत्येवेति पक्वपूर्वी ओदनं कृतपूर्वी कटमित्यादौ कर्मणि न षष्ठी किं तु द्वितीयैवेति पदवाक्यरत्नाकरे प्राहुः । शाब्दिकनव्यास्तु कृतं पूर्वमनेनेति विग्रहे ऽविवक्षितकर्मतया भावे क्तप्रत्यये कृते कर्मसापेक्षत्वाभावात्समासतद्धितौ भवत एव तथा च कृतपूर्वीत्ययम्पूर्वं कृतवानित्यनेन समानार्थकः संपद्यते तद्धिते सति वृत्तिभेदात् कर्मविवक्षायां गुणभूतयाऽपि क्रियया कारकाणां संबन्धस्य कटं कृतवानित्यादौ दर्शनादत्रापि कटकर्मत्वान्वयः तत्र कर्मणि षष्ठीवारणाय सूत्रे कृतीत्युपात्तं न च क्तस्य कृत्त्वात् कृदुपादानेऽपि षष्ठीप्रसक्तिर्दुर्वारैवेति वाच्यम् सूत्रे कृत्पदस्य प्रत्ययान्तराप्रकृतिभूतस्यैवोपादानात् कृतपूर्वशब्दस्य तद्धितप्रकृतितया क्तान्तकृतशब्दस्य तद्धितप्रकृतित्वात् । तण्डुलस्य पाचकतम इत्यादौ षष्ठ्या असाधुत्वमिष्टमेव अत एव तण्डुलं पाचकतम इत्यादिप्रयोगं साधुं कालापा

मन्यन्त इत्याहुः। तच्चिन्त्यं विग्रहवाक्ये विवक्षितकर्मकस्य वृत्तिवाक्ये सकर्मतयाऽदृष्टचरत्वादन्यथा शोभनं पचनमत्रेति विग्रहे विवक्षितकर्मतया भावे ल्युट्प्रत्यये वचनशब्दस्य समासतद्धितयोः कर्मविवक्षायां तण्डुलं शोभनपचनवद्गृहमिति प्रयोगापत्तिः। यदपि प्रत्ययान्तराप्रकृतित्वं कृतो विशेषणं तदपि न सुन्दरं तण्डुलं पाकतरः तण्डुलं पाकवद्गृहमितिप्रयोगापत्तेश्च वस्तुतस्तु भावप्रत्ययमात्रस्याकर्मकेभ्यो न विधानमोदनस्य भुक्तं तण्डुलस्य पाक इत्यादौ षष्ठ्यर्थकर्मत्वस्यानन्वयप्रसङ्गात्। किं तु भावे लकारस्यैव भावे चाकर्मकेभ्य इत्यनुशासनेन तद्विधावकर्मकेभ्य इत्युपादानात्। न चैवमोदनं भुक्तं तण्डुलं पाक इत्यादिकः कर्मद्वितीयासमभिव्याहृतः प्रयोगः स्यादिति वाच्यं कृतिषष्ठ्या द्वितीयाऽपवादात्। एतदर्थमेव सूत्रे कृतीत्युपादानमन्यथा सामान्यतः कर्मणि द्वितीयाषष्ठ्योरुभयोर्विधाने वैकल्पिकताऽऽपत्तेः। नन्वेवं कृतपूर्वी कटमित्यादौ निष्ठास्वरूपकृद्योगस्यावैकल्यात्। कर्मणि षष्ठीप्रसङ्गो द्वितीयाऽपवादप्रसङ्गश्च न च "न लोके"तिसूत्रेण निष्ठायोगे षष्ठीनिषेधान्नैवमिति वाच्यं "नपुंसके भावे उपसंख्यानमि"ति वार्तिकेन भावे क्तस्ययोगे षष्ठीप्रतिप्रसवादिति चेन्मैवं सूत्रे कृतीत्यत्र कृत्पदस्य विशेषपरत्वात्। तथा हि क्तप्रकृतिकत्वेन विहितस्य प्रत्ययस्य प्रकृतिभूतो यः कृत् तद्योग एव कर्तृकर्मणो षष्ठीविधानं "सपूर्वाच्चे"तिसूत्रेणेनिप्रत्ययविधाने पूर्वशब्दस्य सपूर्वकत्वं क्तान्तशब्दपूर्वकत्वमेवान्यथा कुड्यपूर्वीत्यादि-

प्रयोगापत्तेः क्तान्तपूर्वकपूर्वशब्दप्रकृतिकत्वेन विहित-स्येनिप्रत्ययस्य विशिष्टप्रकृतिकतया विशेषणक्तान्तप्र-कृतिकत्वेनापि विधानमिति इनिप्रकृतिभूतक्तान्तकृ-च्छब्दस्य विवक्षितकृत्त्वविरहात् तद्योगे तु न षष्ठीप्रस-क्तिः द्वितीया तु सामान्यतो विहिता भवत्येवेति ना-नुपपत्तिः इत्थं च तण्डुलस्य पाचकतरः तण्डु-लस्य पाकवानित्यादौ ण्वुल्घञादेर्विवक्षितकृत्त्वव-त्त्वात् तद्योगे कर्मषष्ठ्या नानुपपत्तिः तरब्मतु-बादेः कृत्प्रकृतिकत्वेनाविधानात् अतिशायनसंब-न्धाद्यर्थे विहितस्य तस्य गुणवत्तरः सौन्दर्यवान् पुरु-षः करोति गृहमित्यादौ तद्धितप्रकृतिकत्वेन दर्शनात् अत एव कर्तुरीप्सिततमं कर्मेत्यत्र कर्तरि षष्ठीनि-र्देशः अन्यथा तमप्प्रकृतिक्तान्तयोगे कर्तरि तृतीया-या एव निर्देशःस्यादिति एवमिष्टी सुरानित्यादौ क्तान्तप्रकृतिकत्वेनेनेर्विधानात् तस्य विवक्षितकृत्त्व-विरहात् तद्योगे कर्मणि न षष्ठी किं तु द्वितीया स-प्तमी चेत्यादिकं वक्ष्यते अत एव ग्रामं गतवानित्यादौ कृदर्थभावनायां ग्रामकर्मत्वस्येव कृतपूर्वी कटमित्यादौ तद्धितार्थभावनायां कटकर्मत्वस्यान्वयः तत्र निष्ठादि-भिन्नकृदर्थभावनायां षष्ठ्यर्थकर्मत्वस्यान्वयो न तु त-द्धितार्थभावनायामित्यावेदयितुं सूत्रे कृतीत्युपादान-मिति भाट्टमतेन कृतीतिसमर्थनमित्यपि न युक्तं भा-ट्टमतेऽपि भाव्यसंस्कार्याभ्यामतिरिक्तस्य भावनाकर्मत्व-विरहात् ग्रामं गत इत्यादौ गमनभावनायां ग्रामक-र्मकत्वविरहात् ग्राममितिद्वितीयान्तार्थः ग्रामसंबन्धः

गमने तद्भावनायां चान्वेतीत्यस्य द्वितीयाविवरणे स-क्तून् जुहोतीत्यत्रोक्तत्वात् भाव्यस्यापि कटस्य तद्धितार्थभावनायां नान्वयः द्वितीयार्थकर्मत्वान्वयस्य तिङर्थे कृदर्थे वा भावनायां वा व्युत्पन्नत्वात् । तद्धितार्थे व्युत्पत्तिविरहात् । अन्यथा नावा तरतीति विग्रहव्युत्पन्ननाविकशब्दयोगे द्वितीयापत्त्या नदीं नाविक इति प्र-योगप्रसङ्गात् न च तद्धितार्थभावनायां द्वितीयार्थ-स्य कर्मत्वस्यान्वये धातुसमभिव्याहारस्तन्त्रमिति कृत-समभिव्याहारस्य तथात्वात् द्वितीयार्थकर्मत्वस्यान्वयः नाविक इत्यत्र धातुसमभिव्याहारविरहान्नान्वय इति वाच्यम् । तथापि शीर्षहारेण हारेण वा हरतीतिवि-ग्रहव्युत्पन्नस्य शीर्षहारिकशब्दस्य हारिकशब्दस्य वा योगे द्वितीयापत्त्या भारं शीर्षहारिको हारिको वेति प्रयोगप्रसङ्गात् । धातुसमभिव्याहारस्याऽत्र सत्वात् । "भस्त्रादिभ्यष्ठन्" इति सूत्रेण ठन्विधानात् शीर्षहारिकहारिकयोः सिद्धशीर्षहारहारशब्दयोर्भस्त्रादिगणपाठा-दित्यलं विस्तरेण । कर्मणि षष्ठीं नियमयति । "उभय-प्राप्तौ कर्मणि" इति सूत्रं उभयप्राप्तिरिति बहुव्रीहिः । उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् कृति सोऽयमुभयप्राप्ति-स्तत्र कर्मण्येव षष्ठी भवतीत्यर्थकं पूर्वसूत्रेण षष्ठ्यां सिद्धायां पुनः कर्मणि षष्ठीविधाननियमार्थमिति नियमस्तु कर्मणि षष्ठी न तु कर्तरीत्याकारकः । आश्चर्यो गवां दोहोऽशिक्षितेन गोपेन इत्यादौ षष्ठ्याः कर्मत्वं तृतीयायाः कर्तृत्वमर्थो दोहेऽन्वेति । यद्यत्र न कर्मषष्ठी-प्रयोगस्तदा कर्तृषष्ठी साधुरेव । उभयप्राप्तावित्यनेनो-

भयषष्ठीप्रयोगे कर्तरि षष्ठी न साधुरिति ज्ञाप्यते तेन नलस्य पाको भीमस्य पाक इत्यादिप्रयोगाणां नानुपपत्तिः गोपस्य दोह इत्यादिप्रयोगोऽपीष्ट एव अककारयोः स्त्रीप्रत्यययोः प्रयोगे "न शेषे विभाषेति वक्तव्यमि"ति वार्तिकं स्त्रीप्रत्ययेऽकप्रत्ययान्ते अकारप्रत्ययान्ते च न कर्तर्यपि षष्ठीनिषेधः शेषे उक्तोभयप्रत्ययान्तभिन्ने स्त्रीप्रत्यये कर्तरि विभाषा षष्ठीभवतीत्यर्थकं तेन ण्वुल्प्रत्ययान्ते स्त्रीप्रत्ययान्ते कर्तृकर्मणोरुभयोः षष्ठी यथा रुद्रस्य भेदिका जगतः । रुद्रकर्तृकं जगत्कर्मकं भेदनं वाक्यार्थः भावे ण्वुल्विधानात् भेदनमर्थः । अकारप्रत्ययान्ते स्त्रीप्रत्ययान्ते तदुभयोः षष्ठी यथा रुद्रस्य विभित्सा जगत इत्यादौ रुद्रकर्तृका जगत्कर्मकभेदनेच्छा वाक्यार्थः । अप्रत्यादित्यनेन भावेऽकारविधानात् भेदनेच्छार्थः । एवं भेदिका देवदत्तस्य काष्ठानां चिकीर्षा यज्ञदत्तस्य कटस्येत्यादौ दर्शितरीत्या वाक्यार्थो बोध्यः । शेषे कर्तरि विभाषा षष्ठी यथा विचित्रा सूत्रस्य कृतिः पाणिनेः पाणिनिना वेत्यादौ अत्र सूत्रपदोत्तरषष्ठ्याः कर्मत्वमर्थः पाणिनिपदोत्तरषष्ठीतृतीययोः कर्तृत्वमर्थः कृतावन्वेति । काशिकावृत्तौ सुट्तिथोरितिसूत्रव्याख्याने सौयुटौ लिङ्गेवागमौ तेन भिन्नविषयत्वात् सुटा बाधो न भवतीत्युक्तं तत्र बाधशब्दः पुमानेव यदि बाधाशब्दः स्त्रीप्रत्ययान्तस्तदा सौयुटइति शेषे षष्ठी लिङ्गागमिनोऽन्वयानुरोधात् । षष्ठ्यर्थसंबन्धस्यानुषङ्गेण बाधायामन्वयस्तत्र सुट्हेतुकत्वाभावः प्रतीयते । सुटेतिहेतौ न तु करणे तृतीया । कर्तुराकाङ्क्षाया

अनिष्टत्तेरिति । केचित्‌विशेषेण विभाषामिच्छन्ति । अविशेषेण स्त्रीप्रत्यययोरकारप्रत्यययोर्वाविवक्षां विनेत्यर्थ: विभाषामित्यत्र कर्त्तरि षष्ठ्या इत्यादि यथा शब्दानामनुशासनमाचार्येणाचार्यस्य वेत्यादौ शब्दपदोत्तरषष्ठ्या: कर्मत्वमाचार्यपदोत्तरतृतीयषष्ठ्यो: कर्त्तृत्वमर्थोऽनुशासनेऽन्वेति । गुणकर्मणि वेष्यते इतीष्ट्या नेताऽश्वस्य सुघ्नस्य सुघ्नं वेत्यादौ सुघ्नादौ गुणकर्मणि वैकल्पिकीं षष्ठीं शाब्दिका उदाहरन्ति । तत्रेयमिष्टिर्न युज्यते गवां दोह इत्यादौ गुणकर्मणि गवादौ द्वितीयाया अप्रयोगात् । यदि युज्यते तदा नयत्यादिगणगुणकर्मण्येवेति निष्ठायोगे निषेधस्यापवादार्थं षष्ठीं ज्ञापयति । "क्तस्य वर्त्तमाने" इति सूत्रं । वर्त्तमानकालार्थकस्य क्तस्य योगे षष्ठी भवतीत्यर्थकं "मतिबुद्धिपूजार्थेभ्यश्चे"ति सूत्रेण वर्त्तमानधात्वर्थकर्मणि क्तस्य विधानात् वर्त्तमानार्थत्वमुक्तं राज्ञा मतो बुद्ध: पूजितो वेत्यादौ मतिरिच्छा बुद्धिर्ज्ञानं क्तप्रत्ययस्य विषयो धात्वर्थफलस्य विषयत्वस्याश्रयो वाऽर्थ: पूजा प्रीणनं प्रीत्यनुकूलो व्यापार इति क्तस्य समवाय्यर्थ: षष्ठ्या मत्याद्यन्वयिकर्त्तृत्वमर्थस्तथा च राजकर्त्तृकाया मतेर्बुद्धेर्वा विषयो विषयत्वाश्रयो वा राजकर्त्तृकव्यापारप्रयोज्यप्रीतिसमवायी च वाक्यार्थ: । "नपुंसकभावे उपसंख्यानमि"ति वार्त्तिकं "नपुंसके भावे क्त" इति सूत्रेण विहितस्य क्तस्य योगे कर्त्तृकर्मणो: षष्ठी भवतीत्यर्थकं तेन कृष्णस्य शयितं छात्रस्य हसितं चैत्रस्य गमनमित्यादौ षष्ठ्या: कर्त्तृत्वमर्थ: शयनादौ भावे क्तार्थेऽन्वेति । शास्त्रस्याधी

तं शब्दानित्यतायां मतमोदनस्य भुक्तं ग्रामस्य गतमित्यादौ षष्ठ्याः कर्मत्वमर्थः क्तार्थेऽध्ययनादौ भावेऽन्वेति। कर्मविषयषष्ठ्या निष्ठायां निषेधोऽप्रामाणिक एवेत्युक्तम्। पुनरपवादार्थं षष्ठीं ज्ञापयति। "अधिकरणवाचिनश्च" इति सूत्रम्। अधिकरणार्थकस्य क्तस्य योगे कर्तृकर्मणोः षष्ठी भवतीत्यर्थकम्। "क्तोऽधिकरणे चे"तिसूत्रेण विधानात् क्तस्याधिकरणवाचित्वमुक्तम्। इदमेषामासितं शयितं वेत्यादौ षष्ठ्याः कर्तृत्वमर्थः शयनादौ धात्वर्थेऽन्वेति क्तस्याधिकरणमर्थस्तथा चेदंकर्तृताकशयनाधिकरणभिन्नमिदमित्यादिरन्वयबोधः। इदमेषामोदनस्य भुक्तं ग्रामस्य यातं वेत्यादौ इदंपदोत्तरषष्ठ्याः कर्तृत्वमोदनग्रामपदोत्तरयोः षष्ठ्योः कर्मत्वमर्थस्तथा चेदंकर्तृताकौदनकर्मताकभोजनाधिकरणाभिन्नमित्यादिरन्वयबोधः। "कर्तृकर्मणोः कृती"ति प्राप्तषष्ठ्याः केषु चित्कृत्सु निषेधेनासाधुतां ज्ञापयति। "न लोकाव्ययनिष्ठाखलर्थतृनामि"ति सूत्रम्। उकाव्ययनिष्ठाखलर्थतृनइत्येतेषां योगे कर्तृकर्मणोः षष्ठी न भवतीत्यर्थकम्। ल इत्यनेन शतृशानचौ कानच् क्वसुः किकिनौ च गृह्यन्ते। शतृ। ओदनं पचमानः। कानच्। ओदनं पेचानः। क्वसुः। ओदनं पेचिवान्। किकिनौ। पपिः सोमं ददिर्गाः। "आदृगमहनजनः किकिनौ लिट्चे"त्यनुशासनेन तच्छीलादिष्वर्थेषु आदन्तादृदन्ताद्गमिहन्तिजनिभ्यश्च लिट्कार्यकारिणौ किकिनौ प्रत्ययौ विधीयेते लिट्कार्यं द्विर्भावादि आत्। पपिः। ददिः। ऋत्। बभ्रिर्वज्रं। गमि। जग्मिर्युवा। हन। जघ्नि-

र्दवम् । जनि । जज्ञिर्वीजम् । एतद्विधानं छन्दसि बोध्यम् । "भाषायां तु धाञ्कृसृगमिजनिनमिभ्य" इत्यनुशासनेन लोके पृथग्विधानात् । दधिर्दगडं चक्रिः कटं सस्त्रिरन्तिकं जग्मिः ग्राममेवं जज्ञिर्नेमिः पपिरित्यादेः पानशीलादिरर्थस्तथा च सोमकर्मकपानशील इत्यादिरन्वयबोधः सोमं पपिरित्यादौ बोध्यः । उ । चिकीर्षुः कटं बुभुक्षुरोदनम् । अलङ्करिष्णुः कन्याम् । उक । दैत्यान् घातुकः । वाराणसीं गामुकः । उप्रत्ययस्य उकप्रत्ययस्य च तच्छीलादिरर्थः । "उकप्रतिषेधे कमेर्भाषायामप्रतिषेध" इति लक्ष्म्याः कामुक इत्यादौ लोके षष्ठी । अव्यये । कटं कृत्वा ओदनं भोक्तुं । "अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध" इति पुरावत्सानामपाकर्तोरास्ते इत्यादौ तोसुन्प्रत्यये षष्ठी वत्सानपाकर्तुमास्त इति वाक्यार्थः । पुरा क्रूरस्य विसृपो विरप्शिन्नित्यादौ कसुन्प्रत्यये षष्ठी क्रूरान् विसर्पितुं विरप्शाशील इत्यर्थः । विरप्शा विरोधः । अथ वा विरप्शिन् विराध्येत्यर्थः । तोसुन्कसुनौ छान्दसौ तुमर्थौ बोध्यौ । निष्ठायां विष्णुना हता दैत्याः ओदनं भुक्तवान् ग्रामं गत इत्यादौ । खलर्थे ईषत्करः प्रपञ्चो हरिणा । हरिकर्तृकेषत्करणकर्म प्रपञ्चो वाक्यार्थः । अर्थग्रहणात् युच्प्रत्ययेऽपि ईषत्पानः सोमो भवतेत्यादौ भवत्कर्तृकेषत्पानकर्म वाक्यार्थः । तृन्निति प्रत्याहारः । स च "लटः शतृ" इति सूत्रे तृशब्दमारभ्य "तृन्नि"तिसूत्रे नशब्दं यावत् बोध्यस्तेन शानन्चानश्शतृतृणामपि ग्रहणम् । शानन् । सोमं पवमानः । चानश् । आत्मानं मण्डयमानः । शतृ । वेद-

मधीयन्। तृन्। कर्ता लोकान्। "द्विषः शतुर्वा वचनम्" इति मुरस्य मुरं वा द्विषन् इत्यादौ वैकल्पिकी षष्ठी । शानन: कर्तार्थः सोमकर्मकपवनकर्ता वाक्यार्थः । चानशादीनां ताच्छील्यादिकमर्थो वाक्यार्थः स्वयमूह्यः सुधियेति । कृदन्तरेऽपि कृद्योगषष्ठ्या असाधुतां ज्ञापयति । "अकेनोर्भविष्यदाधमर्ण्ययो" रिति सूत्रम् । अकस्य भविष्यति काले गम्यमाने इनस्तु भविष्यदाधमर्ण्ययोर्योगे षष्ठी न भवतीत्यर्थकम् । सज्जनान्पालकोऽवतरति । ओदनं भोजको व्रजति इत्यादौ क्रियार्थक्रियायां ण्वुलो विधानात् पालनादिक्रियाया भविष्यत्त्वमर्थादवगम्यते"भविष्यति गम्यादय"इत्यधिकारे विधानात् तुमुन्ण्वुलोर्भविष्यत्कालार्थकत्वमित्यन्यदेतच्चिन्त्यम् । गम्यादिशब्दानां निपातनात् भविष्यद्गमनकर्तृवाचकत्वं गम्यादौ प्रकृतिप्रत्ययव्युत्पादनं रूढगवादिशब्द इवाचार्यसामर्थ्यमेव गम्यादाविन्प्रत्ययस्यैव वा भविष्यत्कालार्थकत्वं न तु ण्वुल इति। क्रियार्थक्रियायां ण्वुलो भविष्यदधिकारे विधानस्य निष्प्रयोजनत्वात् न ह्यतीताया वर्तमानाया वा क्रियायाः क्रियार्थकत्वं सम्भवतीति । एवं सज्जनं पालकोऽवतरिष्यति भविष्यति वेत्यादौ कर्तरि ण्वुल्विधानेऽपि पालनेऽर्थाद्भविष्यत्त्वावगमे कर्मणि न षष्ठी । व्रजं गमी गामी वा इत्यादौ भविष्यत्त्वावगमादिनो योगे कर्मणि न षष्ठी । शतं दायी दायी वेत्याधमर्ण्यावगमादिनादियोगे कर्मणि न षष्ठी । सर्वोऽयं निषेधः कारकषष्ठ्या न तु शेषे षष्ठ्या अत एव आश्रयस्य कुर्वन् उत्तमर्णस्य दायीत्यादौ षष्ठी ।"इत्वा-

कूणां दुरापेऽर्थे त्वदधीना हि सिद्धय" इत्यत्र"अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्" इत्यत्र च खलर्थयोगे कर्तरि न षष्ठी किं तु शेषे । स च दुरापे सिद्धौ वा दुर्वचे विस्मये वाऽन्वेति । विश्वस्य गोप्ता भुवनस्य कर्तेत्यादौ तृचो योगे कर्मणि षष्ठी साधुरेव ।"ण्वुल्तृचावि"ति सूत्रेण सामान्यत: कर्तरि ण्वुल्तृचोर्विधानात् । तृच: तृन्प्रत्याहारान्तर्भावविरहात् न चैवं "न लोके"तिसूत्रे तृनो ग्रहणं व्यर्थं सर्वत्र तृचैव पाठोपपत्तेरिति वाच्यम् । तृचशतृतृनां स्वरे भेदात् छन्दसि शतृतृनो: प्रयोगे षष्ठीनिषेधार्थत्वात् । शाब्दिकास्तु"कर्तृकर्मणो: कृती"ति षष्ठीविधिरनित्य एव । "तदर्हमि"ति निर्देशात् । अत एव"धात्रैरामोदमुत्तममि"ति भट्टिकाव्यं संगच्छते। अतएव निषेधोऽप्यनित्य: इक्ष्वाकूणामित्यादिदर्शितप्रयोगादित्याहु: । तन्मन्दम् "तदर्हमि"तिनिर्देशे तदित्यव्ययस्य लुप्तषष्ठ्यन्तत्वात्तथैव साहचर्यात् "तत्र तस्येवे"ति पूर्वसूत्रेण सप्तम्यन्तषष्ठ्यन्ताभ्यामिवार्थे वतेर्विहितत्वात् । काशिकावृत्तौ तु तदितिद्वितीयासमर्थादर्हतीत्येतस्मिन्नर्थे वतिप्रत्ययो भवतीतिव्याख्यातं तत्रार्हतीतितिङन्तानुरोधेन द्वितीयासमर्थादित्युक्तम् । वस्तुतस्तस्यतिषष्ठीसमर्थादर्हमित्यर्थे वति: प्रत्ययो भवतीतिव्याख्यानमुचितमिति धात्रैरामोदमित्यादौ प्रकरणादिना भविष्यत्त्वावगमात् । णप्रत्ययस्याकारेण योगेन षष्ठी न चाकारयोगे कुत: षष्ठीनिषेध इति वाच्यम् अकेनोरिति सूत्रे ऽकारस्यापि ग्रहणात् । अकश्च अश्च अका: अकाश्च इन् च अकेनौ तयोरित्याकारग्रहणात् ।

भक्ता इति "सर्वो द्वन्द्वो विभाषैकवद्भवती" त्येकवचनम् एतदर्थमेव भविष्यदाधमर्ण्ययोर्गम्यमानयोरिति व्याख्यातं गम्यमानत्वं तु प्रकृतिप्रत्ययाभ्यामन्येन ज्ञाप्यमानत्वं गतं दाधीत्यादावपि णिनिप्रत्ययस्य कर्त्त्रर्थः । आधमर्ण्यं तु मानान्तरगम्यमेव इच्छाकूणामित्यादौ षष्ठ्युपपत्तिर्दर्शितैवेत्यलं विस्तरेण । कृत्यप्रत्यययोगे वैकल्पिकीं षष्ठीं ज्ञापयति । "कृत्यानां कर्त्तरि वे"ति सूत्रं कृत्यानां प्रत्ययानां योगे कर्त्तरि वा षष्ठी भवतीत्यर्थकम् । मया मम वा सेव्यो हरिः इत्यादौ तृतीयाषष्ठ्योः कर्तृत्वमर्थः सेवने धात्वर्थेऽन्वेति यथा च मत्कर्तृकसेवनकर्म हरिर्वाक्यार्थः । एवं भवता भवतो वा कटः कर्त्तव्य इत्यादावपि वाक्यार्थो बोध्यः । कर्त्तरीत्युपादानात् कर्मणि न षष्ठ्या विकल्पः यथा गेयो माणवकः साम्नामित्यादौ । अत्र"भव्यगेये"ति सूत्रेण कर्त्तरि भव्यगेयादिशब्दानां निपातनात् । अनभिहिते कर्मणि कृद्योगे षष्ठी । पचेलिमा माषा इत्यादौ कर्मकर्त्तरि केलिमरादौ कर्मकर्त्रोरुभयोरभिधानात् । कृद्योगे न षष्ठीति ।"उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्य"इति गुणकर्मणि षष्ठ्या निषेधः । यथा नेतव्याः व्रजं गावः कृष्णेन कृष्णस्य वेत्यादौ । अत्र व्रजादौ गुणकर्मणि न षष्ठीति ।

इति विभक्त्यर्थनिर्णये कारकषष्ठ्यर्थनिर्णयः ।

नामार्थान्वयिनः षष्ठ्यर्था अकारकतया संज्ञावन्ते तत्र शेषः "षष्ठी शेषे" इति सूत्रविवेचने प्रागेव दर्शितः । शेषत्वेन प्रतियोगित्वादिकं न षष्ठ्यर्थः किं तु प्रतियोगित्वत्वादिनेति ज्ञापयितुं "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्यामि" ति सूत्रं तदेतत् तृतीयाविवरणे व्याख्यातम् । चतुर्थ्या सह वैकल्पिकीं षष्ठीं ज्ञापयति । "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" इति सूत्रम् । आशिषि गम्यमानायां आयुष्यमद्रभद्रकुशलसुखार्थहितइत्येतैः शब्दैर्योगे चतुर्थी विभक्तिर्भवति चकारात्षष्ठी भवतीत्यर्थकम् । मद्रभद्रशब्दयोः पर्यायद्योग्रहणात् दर्शितशब्दानां पर्यायशब्देन योगेऽपि चतुर्थी भवति । आयुष्यं चिरजीवितं वा कृष्णाय कृष्णस्य वा भूयात् इत्यत्र चतुर्थीषष्ठ्योः संबन्धोऽर्थ आयुष्येऽन्वेति । आयुष्यं दीर्घजीवितं तथा च कृष्णसंबन्धि दीर्घजीवितमाशंसाविषयभवनकर्तृ इत्यन्वयबोधः । मद्रं भद्रं वा ब्राह्मणाय ब्राह्मणस्य वा भूयाद् इत्यत्र मद्रमङ्गलनिवृत्तिः कुशलमारोग्यं सुखमानन्दो वा शिष्याय शिष्यस्य वा भूयात् । सुखं स्वतः काम्यो गुणविशेषः । अर्थः प्रयोजनं वा शिष्याय शिष्यस्य वा भूयात् । प्रवृत्त्युद्देश्यं प्रयोजनं हितं पथ्यं वा शिष्याय शिष्यस्य वा भूयात् । हितं कालान्तरभाविन इष्टस्य साधनं तादृशमिष्टसाधनं वा बोध्यमिति दर्शितरीत्या सर्वत्रान्वयो बोध्य इति । आशिषीत्युपादानात् मार्कण्डेयस्यायुष्यमस्तीत्यादौ न चतुर्थीति । "षष्ठ्यर्थे चतुर्थी वक्तव्येति" वार्तिकं षष्ठ्यर्थे शेषे चतुर्थीमपि विधत्ते छन्दसि । यथा या नखानि कृ-

न्नते तस्मै कुनखं जायते यथा वा अहल्यायै जार इत्यादौ अत्र चतुर्थ्याः संबन्धोऽर्थः कुनखादावन्वेति । लोके तु तस्याः कुनखम् अहल्याया जार इत्यादौ षष्ठ्येव साधुरिति । अतसर्थप्रत्ययेयोगे षष्ठीं विधत्ते "षष्ठ्यतसर्थप्रत्ययेने"ति सूत्रं दक्षिणोत्तराभ्यामतसुजित्यनेनातसुज् विधीयते अत एवातसजर्था ये प्रत्ययास्तैर्योगे षष्ठी भवतीत्यर्थकम् । ग्रामस्य दक्षिणत उत्तरतो वा नदीत्यत्र षष्ठ्याः पूर्वोक्तमवधिमत्त्वमर्थो दक्षिणादावन्वेति । सप्तम्यन्तादिभ्यो विधानादतसर्थप्रत्ययानामाधेयत्वमर्थो नद्यादावन्वेति । तथा च ग्रामावधिकदक्षिणदेशविश्यवृत्तिर्नद्यादिरन्वयबोधः । विन्ध्याद्दक्षिणत इत्यादौ विन्ध्यमारभ्येतित्यवल्लोपे पञ्चमी बोध्या पुर अध इत्यत्रासिप्रत्ययः । पुरस्तात् अधस्तादित्यत्रास्तातिप्रत्ययः । नगरस्य पुरः पुरस्ताद्वा आरामः पर्वतस्याधो अधस्ताद्वा काननम् उपरि उपरिष्टादितिनिपातयोर्योगे पर्वतस्योपर्युपरिष्टाद्वा मेघः । पश्चादितिनिपातयोगेऽपि नृपस्य पश्चादुपविशामः ।"ततः पश्चात्स्रंस्यत"इति भाष्यप्रयोगात् पश्चाच्छब्दयोगे पञ्चम्यपि दर्शितरीत्या सर्वत्रान्वयो बोध्यः । एनबन्तयोगे द्वितीयां ज्ञापयति । "एनपा द्वितीया" इति सूत्रम् । एनप्प्रत्यययोगे द्वितीया विभक्तिर्भवतीत्यर्थकं"षष्ठ्यपीष्यते"इतीष्ट्या षष्ठ्यप्येनपा योगे भवति । ग्रामं ग्रामस्य वा दक्षिणेन नदी ग्रामं ग्रामस्य वोत्तरेण नदीत्यादौ द्वितीयाषष्ठ्योरवधिमत्त्वमर्थः । एनप्प्रत्ययस्याधेयत्त्वमर्थः पूर्ववदन्वयः "तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं दूराल्लक्ष्यं सुरपतिधनुश्चा-

कृष्णा तोरणेन" इत्यादावुत्तरेणेति नैमवर्त्तं किं तु तृतीयान्तं तोरणेनेत्यस्य विशेषणमित्याहुः । वस्तुतस्तु दक्षिणेन याहीत्यादाविव "प्रकृत्यादि" वार्त्तिकेनाभेदत्वार्थिका प्रकृते:ष्युत्तरेणेति तृतीयेत्यतः भजपतिगृहादिति पञ्चम्या नानुपपत्तिरिति ।

इति विभक्त्यर्थनिर्णये कारकषष्ठ्यर्थनिर्णयः ।

इति विभक्त्यर्थनिर्णये षष्ठीविवरणं समाप्तम् ।



अथ सप्तमी ।

ङ्योस्सुप इति त्रयः प्रत्ययाः । अत्र ङकारः प्रकारथानुबन्धः क्वचिदप्यश्रूयमाणत्वान्न वाचकताकुक्षिप्रविष्ट इति । सरसि सरसोः सरःसु वा सञ्चरतीत्यादौ श्रूयमाणत्वादिकारस्यैत्वेन ओसस्तत्त्वेन सोः सुत्वेन वाचकत्वम् । अनुशासनसिद्धश्च सप्तम्या अर्थः । अनुशासनं च "सप्तम्यधिकरणे चे"ति चकारात् दूरान्तिकार्थकशब्देभ्योऽपि सप्तमी भवति यथा दूरे विप्रकृष्टे सविधे अन्तिके इत्यादौ तत्राधिकरणमधिकरणत्वमाधेयत्वं वा सप्तम्या अर्थ इति वक्ष्यते । अधिकरणपदसङ्केतग्राहकं पूर्वसुक्तम् । "आधारोऽधिकरण"मिति सूत्रं कर्तृकर्मद्वारा क्रियाया आधारो अधिकरणसंज्ञः स्यादित्यर्थकम् । अनभिहितेऽधिकरणे सप्तमी भवति पचनी स्थालीत्यादौ न सप्तमी । अधिकरणादेः सप्तम्यर्थस्य कर्तृकर्मान्यतरद्वारकस्यैव क्रियायामन्वयात् कारकत्वं न तु कारकान्तरद्वारकाधिकरणस्य क्रियायामन्वयोऽभ्युपेयते । यदाहुः ।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥

इति उपकुर्वत्क्रियासहकारि निरधिकरणयोः कर्तृकर्मणोः क्रियासिद्ध्यनुपार्जकत्वादधिकरणस्य क्रियासिद्धिसहकारित्वं न च गगनमस्ति गगनं जानातीत्यादौ निरधिकरणस्य कर्तुः कर्मणश्च क्रियासिद्ध्युपयोगित्वान्नेदं युक्तमिति वाच्यम् । कालाधिकरणस्य गमनादेः सत्तादिक्रियाकर्तृत्वकर्मत्वयोगित्वाद् इदानीं

गगनमस्तीदानीं गगनं जानातीतिप्रत्ययात्। न चैवं काशीस्थो राजा मथुरायां ब्राह्मणेभ्यो ददाति गिरौ वृक्षात्पर्णमधो गच्छतीत्यादौ संप्रदानापादानाधिकरणयोः क्रियाविषयकप्रतीतिविषयत्वात् क्रियायां कुतो नान्वय इति वाच्यम्। निर्वर्त्यविकार्ययोरेव कर्मणः कर्तृत्वविवक्षायां कर्मवद्भावस्येव कर्तृकर्माधिकरणयोरेव क्रियायामन्वयस्याचार्यैरभ्युपगमात् तस्मात्कर्तृकर्मान्यतरद्वाराधिकरणं क्रियान्वयित्वात् कारकमिति। एवं कटे आस्ते चैत्रः गेहे पचति मैत्र इत्यादौ कर्तृघटितपरम्परासंसर्गावच्छिन्नमाधेयत्वं सप्तम्यर्थस्तच्च प्रकृत्यर्थविशेषितं व्यापारेऽन्वेति स्थाल्यामोदनं पचति चैत्रः तरौ फलं गच्छति शकुनिः इत्यादौ कर्मघटितपरम्परासंसर्गावच्छिन्नाधेयत्वं सप्तम्यर्थस्तच्च प्रकृत्यर्थविशेषितं फलेऽन्वेति। ननु दर्शिततत्तत्संसर्गावच्छिन्ननानाविधाधेयत्वस्य सप्तम्यर्थत्वे गौरवाद् अधिकरणमेव सप्तम्यर्थो लाघवात् अधिकरणस्य स्वनिरूपितेन तत्तत्संसर्गावच्छिन्नाधेयत्वेन संबन्धेन फलव्यापारयोरन्वयाभ्युपगमान्नानुपपत्तिरिति शाब्दिकमतमेव सम्यगिति चेन्मैवम्। अधिकरणताविशिष्टस्याधिकरणस्य तथात्वे गौरवादाधेयत्वस्य तथात्वे लाघवादित्यादेर्द्वितीयाविवरणे दर्शितत्वात् न चाधिकरणतात्वस्याखण्डोपाधितया शक्यतावच्छेदकलाघवादधिकरणत्वस्य तथात्वमस्त्विति वाच्यम्। परम्परान्वयिनोऽधिकरणत्वस्यापेक्षया साक्षादन्वयिन आधेयत्वस्यैव तथात्वौचित्यात्। न च नानासंसर्गावच्छिन्नत्वस्याधेयत्वे प्रवेशाद्गौरवमिति वा-

च्यम् । अधिकरणत्वादावपि तुल्यत्वात् यदि चाधिकरणत्वादेर्नानासंसर्गावच्छिन्नाधेयत्वेन संबन्धेनान्वय इति मन्यते तदाऽऽधेयत्वमेव सप्तम्यर्थस्तस्य कर्तृघटितपरम्परावच्छिन्नाधेयत्वीयस्वरूपेण संबन्धेनान्वय इति नानुपपत्तिः वृत्त्यनियामकसंबन्धस्य प्रतियोगिताऽनवच्छेदकत्वमतोऽधिकरणत्वादेः सप्तम्यर्थत्वं न युज्यते गेहे न पचति पक्षा वेत्यादौ निषेधप्रतीत्यनुपपत्तेरित्यादिकं द्वितीयाविवरणे दर्शितम् । फलव्यापारयोः स्वाश्रयसंबन्धावच्छिन्नाधेयत्वस्य सप्तम्यर्थस्यान्वयोऽभ्युपेयते स्वाश्रयसंबन्धस्तु क्व चित्संयोगः यथा कटे आस्ते चैत्र इत्यादौ कर्तृसंयोगः स्थाल्यामोदनं पचतीत्यादौ कर्मसंयोगः क्व चित्समवायः यथा घटे रूपमस्तीत्यादौ कर्तृसमवायः अस्मिन् गां विक्रीणीत इत्यादौ कर्मणो गोः स्वामित्वं तथा घटे नीलरूपं करोतीत्यादौ कर्मसमवायः क्व चित्कालिकविशेषणता यथा पौर्णमास्यां चन्द्रं ग्रसते राहुरित्यादौ कर्तृकर्मणोः कालिकविशेषणता यथा क्व चिद् विषयता इच्छा मोक्षेऽस्तीत्यादौ कर्तृविषयता घटे चाक्षुषं जनयति सूते वा चक्षुष्मानित्यादौ कर्मविषयता क्व चिदन्यादृशोऽपि स्वाश्रयसंबन्धः प्रयोगानुसाराद्बोध्यः । अपादानादेः फलव्यापारयोरनधिकरणत्वात्तदधिकरणनिरूपितस्य दर्शितसंबन्धावच्छिन्नाधेयत्वस्याप्रसिद्धेरपादानाद्यधिकरणस्य न कारकत्वमित्यतः कर्तृकर्मणोरेवाधिकरणयोः कारकत्वमाचार्या मन्यन्ते । गुरुचरणास्तु कटे आस्ते चैत्र इत्यादौ संयोगावच्छिन्नमाधेयत्वं कर्तृनिष्ठं स्थाल्या-

सोदनं पचतीत्यादौ संयोगावच्छिन्नमाधेयत्वं कर्मनिष्ठं सप्तम्यर्थः कर्तृकर्मनिष्ठयोराधेयत्वयोः सामानाधिकरण्येन संबन्धेन व्यापारफलयोरन्वय इत्यपादानादिनिष्ठाधेयत्वस्य सामानाधिकरण्येन धात्वर्थेऽन्वयासम्भवान्नापादानाद्यधिकरणस्य कारकत्वमिति एवमाधेयत्वं क्वचिदाख्यातोपस्थापितकालावच्छिन्नं सप्तम्या प्रत्याय्यते यतो गेहान्निर्गत्य प्राङ्गणे पचमाने चैत्रे गेहे चैत्रः पचतीति न प्रयोगः क्वचिदन्यकालावच्छिन्नमप्याधेयत्वं तथा यथा भाविनीं चैत्राधिकरणतामभिसन्धाय चैत्रो ग्रामे गच्छतीति प्रयुज्यते। आतपे तिष्ठतीत्यादौ आतपपदमातपसंयुक्तदेशपरमतो नानुपपत्तिः सविषयकार्थधातुयोगे विशेष्यतानिरूपितप्रकारत्वस्वरूपं वैज्ञानिकमाधेयत्वं सप्तम्यर्थः यथा शुक्तौ रजतत्वं जानातीत्यादौ शुक्तिनिष्ठविशेष्यतानिरूपितप्रकारत्वं रजतत्वाद्यात्मककर्मघटितपरम्परया ज्ञानादावन्वेतीति पदवाक्यरत्नाकरे प्राहुः। सप्तमीविधाने "क्तस्येन्विषयस्य कर्मण्युपसंख्यानमि"ति वार्तिकं क्तान्तप्रकृतिकेनिप्रत्ययोगे कर्मणि सप्तमीं विधत्ते । कर्मणि सप्तमीविधानं नित्यमित्येके । वैकल्पिकमित्यन्ये । अधीती वेदेषु वेदान्वेत्यादौ "इष्टादिभ्यश्चे"ति सूत्रेण विहितस्य तद्धितेनिप्रत्ययस्य कर्ताऽर्थः सप्तमीद्वितीययोः कर्मत्वमर्थस्तथा च वेदकर्मताकाध्ययनकर्तेत्यन्वयबोधः । एवमिष्टी सुरेषु सुरान्वेत्यादौ संप्रदानत्वस्वरूपं कर्मत्वं सप्तमीद्वितीययोरर्थस्तथा च सुरसंप्रदानताकयजनकर्तेत्यन्वयबोधः । परिगणितो याज्ञिके याज्ञिकं वे-

त्यादौ याज्ञिककर्मनामकपरिगणनकर्त्ता वाक्यार्थः । आ-म्नातौ छन्दसि छन्दो वेत्यादावप्यनया रीत्याऽन्वयो बो-ध्यः । आम्नानं कथनम् । इष्टादिगणः काशिकावृत्तौ द्र-ष्टव्य इति ।

इति विभक्त्यर्थनिर्णये कारकसप्तम्यर्थनिर्णयः ।

नामार्थान्वयिनः दर्शितान्ये क्रियान्वयिनश्च सप्तम्य-र्था अकारकतया संज्ञायन्ते तत्र "सप्तम्यधिकरणे च" ति सूत्रे चकारः दूरान्तिकार्थकशब्देभ्य इव कर्तृकर्मघटि-तेनापि संबन्धेनाधिकरणेऽवच्छिन्नाधेयत्वे वा सप्तमीं विधत्ते अत एव भूतले घट इत्यादौ न सप्तम्यनुपपत्तिः । यत्तु भूतले घट इत्यादावस्तीतिक्रियाध्याहारेण सप्त-म्युपपत्तिरिति शाब्दिकैरुक्तं तदसत् गिरौ वृक्षाद्भूमिं गच्छति विहग इत्यादावध्याहारस्य कर्तुमशक्यत्वात् पञ्चम्यन्तार्थस्य तिङर्थे कर्तृत्वेऽन्वयस्याव्युत्पन्नत्वात् । अत एव "वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुद-र्भैरि"त्यादौ न सप्तम्यनुपपत्तिः न चोत्थानकर्तुरधिक-रणं शैल इति शङ्क्यम् । यत उत्थानाधिकरणमूर्द्धदेश एव न हि शैलः शिखरादूर्द्ध्वो भवतीति संबन्धमात्राव-च्छिन्नमाधेयत्वं सप्तम्यर्थः सूत्रेऽधिकरणपदोपादाना-त्तत्र स्वाश्रयसंबन्धावच्छिन्नमाधेयत्वं क्रियाऽन्वयिकार-कतयोपेयत इति तु परमार्थः । एवं भूतले घट इ-त्यादौ संयोगावच्छिन्नमाधेयत्वं सप्तम्यर्थो घटादाव-न्वेति तथा च भूतलवृत्तिर्घट इत्यादिरन्वयबोधः । घटे रूपमित्यादौ समवायावच्छिन्नं स्फटिके जवालौहित्य-मित्यादौ परम्परासंबन्धावच्छिन्नमाधेयत्वं सप्तम्यर्थः ।

धनं दुरधिकारिणि इत्यादौ स्वामित्वावच्छिन्नाधेयत्वं सप्तम्यर्थः । गोषु प्रभुः मगधेषु राजेत्यादौ स्वत्वसंबन्धावच्छिन्नाधेयत्वं सप्तम्यर्थः । स्फटिके लौहित्ये जपाकुसुमसुपाधिरित्यादौ स्वेतरविशेष्यताकस्वधर्मप्रकारताकज्ञानजनक उपाधिशब्दार्थस्तत्र लौहित्याधेयत्वं प्रकारतायां स्फटिकाधेयत्वं विशेष्यतायामन्वेति स्फटिकलौहित्येऽयमुपाधिरित्यत्र स्वप्रकारताकज्ञानविशेष्यतासंबन्धावच्छिन्नाधेयत्वात्मकस्फटिकपदलभ्यस्ताद्दात्म्येन लौहित्येऽन्वेति तादृशलौहित्याधेयत्वस्योपाधिशब्दार्थैकदेशे प्रकारत्वे पूर्ववदन्वयो व्युत्पत्तिवैचित्र्यादिति । धूमे साध्ये वह्नौ हेतावार्द्रेन्धनमुपाधिरित्यत्र साध्यव्यापक उपाधिशब्दार्थस्तादात्म्येनार्द्रेन्धनेऽन्वेति तादृशार्द्रेन्धने व्याप्यत्वसंबन्धावच्छिन्नं धूमाधेयत्वमन्वेति । अत एव व्याप्यत्वव्यभिचारित्वसंबन्धौ वृत्त्यनियामकाविति तान्त्रिकाः । साध्यशब्दार्थस्तु सिसाधयिषोद्देश्यसिद्धिविधेयताऽवच्छेदकधर्मवान्बोध्य इति । प्रभाते गोष्ठे मध्याह्ने कच्छे गौरित्यादौ कालिकसंबन्धावच्छिन्नमाधेयत्वं सप्तम्यर्थः । यदि च कालिकाधेयत्वं गोष्ठादिदेशविशेषणतया भासते तदाऽवच्छेदकतात्वेन व्यपदिश्यते अत एवावच्छेदकत्वार्थिका सप्तमीति मन्यन्ते तान्त्रिकाः । न हि स्वरूपसंबन्धविशेषोऽतिरिक्तं वाऽवच्छेदकत्वं सप्तम्यर्थः सम्भवति अनुशासनविरहात् । एवं गोष्ठादिदेशाधेयत्वं यदि प्रभातादिकालविशेषणतया प्रतीयते तदा तदपि दैशिकावच्छेदकतात्वेन व्यपदिश्यते । न च देशाधेयत्वेन प्रभातादिकालविशेषणं सम्भवति अव्यावर्तकत्वादिति

वाच्यम् । द्वीपान्तरप्रभातव्यावर्तकैतद्द्वीपवृत्तित्वस्येव गो-ष्ठादिवृत्तित्वस्यापि व्यावर्तकत्वसम्भवात् यत्र तु दैशि-ककालिकाधेयत्वयोः कालदेशयोर्न विशेषणत्वमव्या-वर्तकत्वात् तत्र नावच्छेद्यावच्छेदकभाव उपेयते यथा इदानीं गुणे सत्त्वादौ अत्र गुणाधेयत्वं न प्रत्यक्षका-ले प्रत्यक्षकालवृत्तित्वं वा गुणे विशेषणमव्यावर्तकत्वात् किं तु प्रत्यक्षकालाधेयत्वं गुणाधेयत्वं च स्वातन्त्र्येण सत्तायामेव प्रतीयतेऽन्यथानुपपत्तेरिति । एवं वृक्षे शाखायां कपिसंयोग इत्यादौ शाखाधेयत्वं वृक्षविशेष-णमिति शाखाऽवच्छेदकत्वेन व्यपदिश्यत इति। "यस्मि-न्नग्नौ पचेदन्नं तत्र होमो विधीयते" इत्यादौ प्रयोजनक-व्यापारस्वरूपः संबन्धो वृत्तिनियामकस्तत्संबन्धावच्छि-न्नमाधेयत्वं सप्तम्यर्थो वह्निविशेषितः पाकेऽन्वेति अत एव व्यापारस्तत्प्रयोज्यत्वं वा सप्तम्यर्थ इति तान्त्रिक-वाक्ये दर्शिताधेयत्वस्येव व्यापारादिशब्देन व्यपदिश्यत इति । क्वचिद्व्यापकतासंबन्धोऽपि वृत्तिनियामकः यथा कारणतायामनन्यथासिद्धिर्नियतपूर्ववर्तित्वं वेत्यादौ अत्र व्यापकतासंबन्धावच्छिन्नमाधेयत्वं सप्तम्यर्थो अ-न्यथासिद्धिविरहे नियतपूर्ववर्तित्वे चान्वेति व्यापक-त्वार्थिका सप्तमीति तान्त्रिकवाक्ये व्यापकत्वशब्देन व्या-पकत्वसंबन्धावच्छिन्नमाधेयत्वं प्रख्याप्यते अतो व्यापक-त्वस्य न सप्तम्यर्थत्वमनुशासनविरहादिति प्रत्युक्तम् । सा-धुशब्दस्य सङ्केतसंबन्धोऽपि वृत्तिनियामकः यथा कर्तरि शप् भू सत्तायामित्यादावनुशासने "विनायके विघ्नरा-जद्वैमातुरगणाधिपा" इत्यादौ कोशे अत्र सङ्केतसंबन्धा-

वच्छिन्नाधेयत्वं सप्तम्यर्थः कृत्त्वार्थे तिङ्प्रत्यये भू-
धातौ विष्णुराजादिशब्दे चान्वेति। ननु भूसत्तायामित्यत्र
भूशब्दे कथं सप्तम्यर्थस्यान्वयबोधः स्वरूपपरशब्दस्य सुप्-
प्रकृतेरेव साधुत्वात् न च स्वरूपपरस्यापि धातुशब्दस्या-
धातुरिति पर्युदासात्प्रातिपदिकसंज्ञाविरहात्सुप्प्रकृतित्व-
विरहेऽपि साधुत्वान्नानुपपत्तिरिति शाब्दिकमतं युक्त-
मिति वाच्यं तथा सति "भुवः बुग्" "त्यक्" "भाषायां सद-
वसश्रुव" इत्यत्र च निर्देशे धातुशब्दस्य सुप्प्रकृतित्वविर-
हप्रसङ्गात्। न च श्रोत्रोपस्थिते भूशब्दे सप्तम्यर्थस्यान्व-
यबोध इति वाच्यम्। वृत्त्या शब्देनोपस्थापित एवार्थे
तथाभूतस्यार्थस्यान्वयबुद्धेर्व्युत्पत्तिसिद्धत्वाद् वृत्त्यनुपस्था-
पितेऽर्थेऽन्वयबोधस्याप्रामाणिकत्वाद् अन्यथा श्रोत्रोप-
स्थिते मृदङ्गशब्दे गुणपदोपस्थापितगुणस्य तादात्म्ये-
नान्वयबोधसामग्रीसत्त्वात् मृदङ्गशब्दो गुण इत्यन्वय-
बोधप्रसङ्गादिति चेत्। अत्र गुणाचरणाः। यदर्थशक्त्या
धातुत्वं निपातत्वं वा शब्दानां तदर्थसंबन्धस्वरूपलक्षणा-
यामपि तेषां शब्दानां धातुत्वं निपातत्वं वाऽक्षतमेवेति
यथा वाशब्दस्य गत्याद्यर्थकत्वे धातुत्वं विकल्पाद्यर्थकत्वे
निपातत्वं तत्तदर्थसंबन्धस्वरूपलक्षणायां धातुत्वं निपा-
तत्वं चेति भूशब्दस्य स्ववाच्यवाचकत्वस्वरूपलक्षणायां
धातुत्वं निराबाधमिति भूशब्दस्य न सुप्प्रकृतित्वमिति
भूधात्वर्थे स्ववाच्यवाचकत्वेन लक्ष्ये भूशब्दे सप्तम्यर्थ-
स्यान्वय इति न काऽप्यनुपपत्तिरिति प्राहुः। केचित्तु
अनुकरणशब्दाः साधव इति सामान्यत एव भूसत्ता-
यामित्यनेन ज्ञाप्यते अत एव गवित्याह प्रतिजानीते प्र

त्यन्त्वित्यादीत्यादिष्वनुकरणनिरर्थकशब्दान्तर्गतस्यैचो-ऽवादेशः हेलयो हेलय इति वदन्तोऽसुराः पराबभूवुरि-ति श्रुतापभ्रंशानुकरणाल्लयशब्दान्तर्गतस्याकारस्य पूर्व-रूपत्वं सङ्गच्छते अन्यथाऽवादिविधीनां साधुशब्दमात्र-विषयतया गोश्चालोकेऽलक्ष्मिश्चईइत्यादौ भाषायामिव प्रसक्तिर्न स्यादिति अनुकरणसाधुभूते भूशब्दे श्रोत्रोप-स्थिते सप्तम्यर्थस्यान्वयः अत एवश्रोत्रोपस्थिते पचती-तिशब्दे पाकं करोतीति विवरणवाक्यार्थस्य पाककर्तृत्व-स्य प्रतिपादकतया संसर्गेणान्वयः विरणवाक्ये तिङः साधुत्वार्थं प्रयोगः । अथ वा विवरणवाक्यं पाककर्मत्वमिव करणाश्रयत्वमधिकं प्रतिपादयदपि पाककर्तृत्वमर्थतः प्रतिपादयतीति पाककर्तृत्वस्य प्रतिपादकतया विव्रिय-माणे पचतीतिवाक्येऽन्वयः न हि विवरणविव्रियमाणवा-क्ययोरन्यूनानतिरिक्तार्थकतानियमः । एवं चान्वाचयस-माहार इतरेतरसमुच्चय इत्यादावप्यन्वयो बोध्य इत्या-हुः । तन्न सुन्दरम् । अनुकरणशब्दस्य विभक्तिविनाकृतस्य श्रोत्रोपस्थितस्यान्वयोपगमे शब्दो गोइत्यादावप्यन्वय-बोधप्रसङ्गात् । अनुकरणशब्दस्यान्वयोपगमेऽप्यनुकार्यश-ब्दस्यान्वयानुपपत्तेस्तस्यानुकार्यस्य साधुतायाः केनाप्यज्ञा-पनात् पचतीत्यादौ तु पचेः पचतिपदे तिङः प्रतिपा-द्यत्वे लक्षणा पचतिप्रतिपाद्यत्वविवरणवाक्यार्थे पाक-कर्तृत्वेऽन्वेति तिङर्थस्य प्रथमान्तार्थ इव तिङन्तार्थेऽप्य-न्वयोपगमात् अत एव पचतिभवतीत्यादावन्वयोपप-त्तिरिति चान्वाचय इत्यादौ चशब्दस्य निपाततया त-दर्थवाचकत्वलक्षणायामपि निपाततया भूसत्तायामि-

त्या दाविवान्वयोपपत्तिः सम्भवतीति गुरुचरणदर्शित-रीतिः । वस्तुतस्तु शब्देनार्थ इवार्थेनापि शब्दः स्मार्यते शब्दार्थयोरुभयोः सङ्केतसंबन्धेन संबन्धित्वात् अत एवार्थं ज्ञात्वा अर्थेन तद्वाचकशब्दं स्मृत्वा वाक्यं प्रयुञ्जते प्रयोक्तारः तथा च यथा किं पचतिभवतीतिप्रश्ने वधूप्रदर्शितकलायादौ कलायादिदर्शनेन कलायादिवाचकं कलायादिपदं द्वितीयान्तं स्मृतवतः प्रष्टुः कलायं भवतीपचतीत्यन्वयबोधो भवति तथा भूशब्दस्वरूपेणार्थेन स्वरूपपरो भूशब्दः प्रथमातः स्मार्यते तेन तु भूशब्दस्वरूपोऽर्थः स्मार्यते तत्र भूशब्दे सङ्केतसंबन्धावच्छिन्नस्य सत्ताऽऽधेयत्वस्यान्वय इति न काऽप्यनुपपत्तिरिति यदि च वधूप्रदर्शितकलायादौ कलायं पचतीति मानसोपनीतभानमेव तदा सत्ताऽऽधेयत्वस्य भूशब्दे मानसोपनीतभानमेवेति इयमेव रीतिः चान्वाचय इत्यादौ पचति पाकं करोतीत्यादिविवरणे च बोध्येति । एवं वाचकत्वार्थो सप्तमीति तान्त्रिकवाक्ये वाचकत्वशब्देन सङ्केतसंबन्धावच्छिन्नाधेयत्वमेव व्यपदिश्यते अतो वाचकत्वस्य सप्तम्यर्थत्वे अनुशासनविरहेऽपि न क्षतिः । दाने बलिः काव्ये कालिदासस्तपसि धूर्जटिरयमित्यादौ बलिप्रभृतिपदानां बल्यादिसदृशे लक्षणा कर्टतानिरूपकसंबन्धावच्छिन्नं दानाद्याधेयत्वम् इदंपदार्थे पुंस्यन्वेति विशिष्टान्वयबलाद्दानवैशिष्ट्यमपि पुंसि प्रतीयते तथा च बल्यादिसादृश्यं दानादिकं प्रतीयते अथ वा सप्तम्यन्तदानादिशब्दसमभिव्याहारबलाद्दानादिस्वरूपतादात्म्येन बल्यादिपदार्थानामिदंपदार्थे पुंस्यन्वयः यथा

समवायेन नील इत्यादौ तृतीयान्तसमभिव्याहारबला-त्समवायेन नीलवैशिष्ट्यं प्रतीयते। एवं पटकुविन्दोऽय-मित्यादौ अन्यतासंबन्धावच्छिन्नं पटाधेयत्वमिदंप-दार्थे पुंस्यन्वेति कुविन्दपदलच्यकुविन्दसदृशस्य ता-दात्म्येनान्वयः अथ वा पटजनकत्वस्वरूपतादात्म्येन कु-विन्दादेरन्वये सप्तम्यन्तपटादिसमभिव्याहारसन्त्वमि-ति क्रियान्वयी तु सप्तम्यर्थो यथा कारणताऽवच्छेद-केऽप्रामाण्यज्ञानाभावो निविशते ऽनुप्रविशति वेत्यादौ धातोर्घटकत्वमर्थः तच्च विषयिताव्यापकविषयिता-कत्वं तत्र निरूपकत्वसंबन्धावच्छिन्नमाधेयत्वं सप्तम्य-र्थोऽन्वेति तथा च निरूपकतया कारणतावच्छेदकवृत्ति-विषयिताव्यापकविषयिताकत्वाश्रयोऽप्रामाण्यज्ञानाभाव इत्यन्वयबोधः। निरूपकत्वार्थिका सप्तमीति तान्त्रि-कवाक्येऽपि निरूपकत्वशब्देन निरूपकत्वसंबन्धावच्छि-न्नाधेयत्वमेव व्यपदिश्यते। रजते शुक्तौ वा रजतत्वं जा-नातीत्यादौ विशेष्यतासंबन्धावच्छिन्नाधेयत्वं सप्तम्य-र्थो धात्वर्थे ज्ञानेऽन्वेति रजतादिविशेष्यतानिरूपितरज-तत्वप्रकारताकत्वं ज्ञानस्यार्थतः प्रतीयते विशेष्यत्वा-र्थिका सप्तमीति तान्त्रिकवाक्ये विशेष्यत्वशब्देन वि-शेष्यतासंबन्धावच्छिन्नाधेयत्वमेव व्यपदिश्यते पर्वते व-ह्निमनुमिनोत्यापादयति वेत्यादावुद्देश्यतासंबन्धावच्छि-न्नाधेयत्वं सप्तम्यर्थो धात्वर्थे अनुमितावापत्तौ वाऽन्वेति पर्वतोद्देश्यतानिरूपितवह्निविधेयताकत्वमनुमितेरापत्ते-र्वाऽर्थतः प्रतीयते। उद्देश्यत्वार्थिका सप्तमीति तान्त्रि-कवाक्ये उद्देश्यत्वशब्देन उद्देश्यतासंबन्धावच्छिन्नाधे-

घटत्वमेव व्यपदिश्यते क्व चिद्घटकतासंबन्धोऽपि वृत्तिनियामकः यथा न्यायेऽवयवाः प्रतिज्ञादिका इत्यादौ घटकतासंबन्धावच्छिन्नाधेयत्वं सप्तम्यर्थोऽवयवादावन्वेति घटकत्वं तु विषयिताव्यापकविषयिताकत्वं प्रागेवोक्तं घटकत्वार्थिका सप्तमीति तान्त्रिकवाक्ये घटकत्वशब्देन घटकतासंबन्धावच्छिन्नाधेयत्वमेव व्यपदिश्यते एवमन्यत्रापि सप्तम्यर्थतया यद्यत्तान्त्रिका व्यपदिशन्ति तत्तत्संबन्धावच्छिन्नाधेयत्वमेव सप्तम्यर्थतयाऽवगन्तव्यमिति । "साध्वसाधुप्रयोगे सप्तमी वक्तव्ये"ति वार्तिकात्साध्वसाधुशब्दयोगे सप्तमी भवति । साधुः कृष्णो मातरि असाधुर्मातुले इत्यादौ प्रियकर्तृत्वं साधुत्वमप्रियकर्तृत्वमसाधुत्वं प्रियमिष्टम् अप्रियं द्विष्टं सप्तम्याः समवेतत्वमर्थं इच्छायां द्वेषे चान्वेति तथा च मातृसमवेतेच्छाविषयकर्ता मातुलसमवेतद्वेषविषयकर्ता कृष्ण इत्यन्वयबोधः । रणे साधुरित्यादौ साधुशब्दार्थः समर्थः सप्तम्या निरूपितत्वमर्थः । सामर्थ्येऽन्वेति सामर्थ्यं स्वरूपयोग्यत्वं तथा च रणनिरूपितसामर्थ्यवानित्यन्वयबोधः । "साधुनिपुणे"तिसूत्रेण साधुशब्दयोगेऽर्चार्थकसप्तमीविधानेऽपि नास्य वार्तिकस्य वैयर्थ्यमर्चाभिन्नार्थकसप्तमीविधायकत्वादिति । "अर्हाणां च कारकत्वेऽनर्हाणां चाकारकत्वे तद्विपर्यये च सप्तमी वक्तव्ये"ति वार्तिकमर्हादिकारके सप्तमीं विधत्ते । अर्हत्वं च क्रियाविशेषितकारकशक्तियोग्यत्वं तच्च भोक्तृत्वादिर्धनवत्त्वादिकं बोध्यमिति । तत्रार्हाणां कारकत्वे यथा ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृष-

त्ता आसते । भोजनकर्तृत्वस्वरूपकारकत्वस्याऽर्हता ऋद्धानां तरणकर्तृत्वस्याऽर्हता शूद्राब्राह्मणानां च प्रसिद्धैव । सप्तम्याः समानकालिकत्वमर्थं आसने धात्वर्थेऽन्वेति । तत्र भुञ्जान ऋद्धविशिष्टसमानकालिकत्वं विशेषणभोजनसमानकालिकत्वमप्यादाय पर्यवस्यति विशिष्टान्वयबलात् तथा च भुञ्जान ऋद्धसमानकालिकासनकर्त्तारो दरिद्रा इत्यादिरन्वयबोधः । ब्राह्मणेषु पूज्यमानेषु शूद्रास्तिरस्क्रियन्ते इत्यादावर्हाणां कर्मत्वे सप्तमी बोध्या अनर्हाणामकारकत्वे यथा दरिद्रेष्वासीनेषु ब्राह्मणास्तरन्ति तरणं तु सद्वृत्त्यनुकूलं वैदिककर्म तद्विपर्यये यथा ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते ब्राह्मणेष्वासीनेषु वृषलास्तरन्तीत्यादौ दर्शितरीत्याऽऽसनभोजनयोरासनतरणयोः समानकालिकत्वं प्रतीयते । अत्र "यस्य च भावेने"तिसूत्रेणैव क्रिययोः समानकालिकत्वं ज्ञाप्यते अतो व्यर्थमेवेदं वार्तिकमिति । यदि च ऋद्धेषु भुञ्जानेषु दरिद्रा आसत इत्यादौ ऋद्धभुञ्जानसमानदेशत्वं समाने प्रतीयमानं विशिष्टान्वयबलाद् भोजनसमानदेशत्वमपि आसने प्रत्याययति तदा क्रिययोः समानदेशत्वप्रतीतिफलकतया नास्य वार्तिकस्य वैयर्थ्यमिति । "निमित्तात्कर्मयोगे सप्तमी वक्तव्ये"ति वार्तिकं कर्मयोगे सति निमित्तवाचकपदात्सप्तमी भवतीत्यर्थकं निमित्तसप्तमीं विदधाति । कर्म धात्वर्थफलवत् तस्य योगः क्वचित्समवायः क्वचित्संयोगः द्वीपिनः कर्मणः चर्मणि समवायः । कुञ्जरस्य कर्मणः दन्तयोः संयोग इति शाब्दिकाः । यस्य प्राप्तिः क्रियाफलं त-

न्निमित्तं तत्र सप्तमी भवतीति यथा।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥

इत्यादौ सप्तम्याः प्राप्तिः स्वस्वामिभावादिसंबन्धोऽर्थः स तु धात्वर्थे हननादावनुकूलतयाऽन्वेति तथा च चर्मप्राप्तिफलकं द्वीपिहननमित्यादिर्वाक्यार्थः। सीमाऽण्डकोशः। पुष्कलको गन्धमृगः।

सीमा घाटस्थितक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्।
अथ पुष्कलको गन्धमृगे क्षपणकीलयोः॥

इति मेदिनीकारः। सीमा घाटस्तज्ज्ञानार्थं पुष्कलकः शङ्कुर्निहतो निखात इत्यर्थ इति हरदत्तः। निमित्तं फलं तत्र हेतुतृतीयावत् तादर्थ्यचतुर्थीवत्सप्तमी भवतीति शाब्दिकाः। तत्तु चिन्त्यम्। न हि चर्म द्वीपिहननफलं हननात्प्रागेव द्वीपिचर्मणः सिद्धत्वात्। अध्ययनेन वसति यूपाय दार्विन्त्यादौ वासात्प्रागध्ययनस्य दारुतः प्राक् यूपस्य च सिद्धत्वात् भवति वासस्याध्ययनफलकत्वं दारुणो यूपार्थकत्वं चेति यदि च द्वीपिनं हन्तुर्न चर्मप्राप्तिः किं तु बलादाहर्तुरन्यस्य तत्रापि दर्शितप्रयोगोऽभ्युपेयते तदा सप्तम्याः प्राप्तीच्छैवार्थस्तस्याः प्रयोज्यतया धात्वर्थे हननेऽन्वयः। अत एव।

हन्तेः कर्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीं।
चतुर्थीबाधिकामाहुः शिखिभागुरिवाग्भटाः॥

इति हरिरप्याह। उपष्टम्भः संयोगविशेषः स च कुञ्जरे हननकर्मणि दन्तयोरतिदृढः द्वीपिनि हननकर्मण्यवयवे आरम्भकसंयोगस्वरूपः गोत्वादिवत् द्वीपि-

त्वादिजातेरवयवावयविष्टत्तित्वादवयवस्यापि द्वीपित्वं "क्रियार्थोपपदस्ये"ति सूत्रेण प्रसक्ताया: चतुर्थ्याः ह-न्तिकर्मोपष्टम्भेबाधिका सप्तमी न तु सर्वत्र तथासति "क्रियार्थोपपदस्ये"ति सूत्रवैयर्थ्यापत्तेः। दार्शनिकास्तु कर्म क्रिया तस्या योगे संबन्धे निमित्तवाचकात्सप्तमी भवतीति वार्त्तिकार्थः निमित्तं तु यत्प्राप्तीच्छाप्रयोज्या यत्प्रयोजिका क्रिया तदुभयं तत्राद्ये चर्मणि द्वीपिनमित्यादौ सप्तमी अन्तःविद्यारजनीच्छये यद्दतीत्यादौ सप्तमी तथा च चर्मणीत्यत्र सप्तम्याः प्राप्तीच्छैवार्थः अविद्यारजनीच्छाये इत्यादौ तादर्थ्यमनुकूलत्वं सप्तम्या अर्थः अनुकूलत्वे चतुर्थी तृतीया सप्तमी भवतीति न परस्परं तासां बाध्यबाधकभाव इति एवं सहकारित्वं जनकत्वं च निमित्तत्वं तत्राद्यं यथा उपरागे स्नानं विवाहे श्राद्धमित्यादौ अत्र सप्तम्याः स्वजन्येष्टविशेषजनकत्वमर्थः स्नानादावन्वेति। एवं गृहद्वारादावारि भग्ने इन्द्रबाहुर्वन्द्यः पायसं ब्राह्मणो भोजयितव्य इत्यादावपि स्वजन्येष्टजनकत्वं सप्तम्यर्थं इन्द्रबाहुवन्दनादावन्वेति। द्वितीयं यथा गोवधे प्रायश्चित्तमित्यादौ अत्र दुरितनाशकत्वं प्रायश्चित्तशब्दार्थः सप्तम्या जन्यत्वमर्थः प्रायश्चित्तैकदेशे दुरितेऽन्वेति। एवमन्यत्रापि निमित्तत्वं बोध्यमित्याहुः। क्रियान्तरसमभिव्याहारे सति कालार्थकक्तदन्तात्सप्तमीं ज्ञापयति। "यस्य च भावेन भावलक्षणमि"ति सूत्रम्। भावः क्रिया यस्य च भावेन क्रियाऽन्तरं लक्ष्यते ततो भाववतः सप्तमी भवतीत्यर्थकम्। अत्र भाववान् कालार्थकक्तदन्तार्थो

बोध्यः । कालार्थकेत्युपादानात् पुरुषेषु पाचकेषु व्रजतीति न प्रयोगः । कर्त्रुपादानात् पुरुषेषु दुष्टचरेषु गच्छतीति न प्रयोगः । एवं गोषु दुह्यमानासु गत इत्यादौ सप्तम्याः कालवृत्तित्वमर्थः कालि प्रकृत्यर्थस्य स्वसंबन्धिभावस्याधिकरणतया तत्प्रागभावाधिकरणतया तन्नाशाधिकरणतया वा यथायोग्यमन्वयः विद्यमानदोहनकर्मणां दुह्यमानशब्दार्थानां गोषु तादात्म्येनान्वयः तथाभूतानां गवां सप्तम्यर्थैकदेशे कालि स्वकर्मकदोहनाधिकरणतयाऽन्वयः तथाभूतस्य सप्तम्यर्थस्य कालवृत्तित्वस्यागमनादौ क्रियान्तरेऽन्वयः तथा च विद्यमानदोहनकर्माभिन्नानां गवां स्वकर्मकदोहनाधिकरणं यः कालस्तद्वृत्त्यतीतं यदागमनं तत्कर्तेत्यन्वयबोधः कर्मपारतन्त्र्येण भासमानाया दोहनक्रियाया आगमनेऽपि कालघटितपरम्परयाऽन्वयः विशिष्टान्वयसामग्रीबलात् क्रियायां परम्परया विशेषणत्वमेवोपलक्षकत्वमिति । एवं गोषु धोक्ष्यमाणासु दुग्धासु वागत इत्यादौ सप्तम्यर्थैकदेशे कालि गवादेः स्वकर्मकदोहनस्य प्रागभावाधिकरणतया नाशाधिकरणतया वाऽन्वयः पूर्ववदन्वयबोधः । प्रकृते दोहनादीनां विद्यमानत्वभावित्वातीतत्वानि क्रियाऽन्तरकालवर्तमानत्वतथाविधकालवृत्तिप्रागभावप्रतियोगिकालवर्त्तित्वतथाविधकालवृत्तिनाशप्रतियोगिकालवर्त्तित्वानि बोध्यानि न तु प्रयोगाधिकरणकालघटितानि वर्तमानत्वादीनि तथासति आगत इत्यत्र निष्ठार्थातीतत्वादेरनन्वयप्रसङ्गात् । एवं "नष्टेषु धार्तराष्ट्रेषु द्रौणिः सुप्तान् ज-

याने” त्यादौ सप्तम्यर्थैकदेशे काले स्वकर्तृकनाशाधिक-रणतया प्रकृत्यर्थस्य धात्वर्थाद्यादेरन्वयः निष्ठार्थातीतत्वं विद्यमाननाशप्रतियोगिकालवृत्तित्वस्वरूपं नाशेऽन्वेति तथा च विद्यमाननाशप्रतियोगिकालवृत्तिनाशप्रतियोग्यभिन्नानां धात्वर्थाद्याणां स्वकर्तृकनाशाधिकरणं यः कालस्तत्कालवृत्तिसुतकर्मकं यदतीतं हननं तत्कर्ता द्रौणिरित्यन्वयबोधः कालाद्येककृदन्तार्थविशिष्टप्रकृत्यर्थान्वितः प्रदर्शितसप्तम्यर्थो भावे एवान्वेति न तु नामार्थेऽतो गोषु दुह्यमानासु घट इत्यादौ नान्वयबोधः । यत्तु गोषु दुह्यमानास्वागत इत्यादौ गोपदोत्तरसप्तम्याः कर्मत्वमर्थो दोहनादौ धात्वर्थेऽन्वेति कृदन्तोत्तरसप्तम्याः कालवृत्तित्वमर्थः शानजादिकृतां भावविशिष्टत्वाद्वर्तमानत्वमर्थस्तथा च गोकर्मकवर्तमानदोहनकालवृत्त्यागमनवानित्यन्वयबोध इति तन्न सुन्दरम् । गवादौ दुह्यमानाभेदान्वयबोधस्यापलापप्रसङ्गात् भावशानजादिकृदन्तस्य नपुंसकत्वनियमात् गोषु दुह्यमाने समागत इत्यादिप्रयोगप्रसङ्गात् गोषु दुह्यमानास्वागत इत्यादिप्रयोगस्यासाधुत्वप्रसङ्गात्सप्तम्याः कर्मत्वार्थकत्वमपि न युज्यते ऽनुशासनविरहात् गोषु यान्तीषु गच्छतीत्यादौ कर्तृकृदन्तेऽपि सप्तमीप्रयोगादिति । एवं “भुक्तवत्सु च विप्रेषु पिण्डान्दर्भेषु निर्वपेदि” त्यादौ सप्तम्यर्थैकदेशे कालेऽतीतभोजनकर्तुः स्वकर्तृकभोजननाशाधिकरणतयाऽन्वयः भोजनस्य तु स्वनाशसमानकालिकतया निर्वापेऽन्वयः विशिष्टान्वयबलादिति । क्व चि-

त्समानकालिकतया क्रिययोरन्वये क्व चित्स्वनागतका-
लिकतया क्रिययोरन्वये प्रयोज्यप्रयोजकभावेनाप्यन्वयः
यथा "पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाजनि शृ-
ण्वती नलमि"त्यादौ प्रतिभूपतिपाठनलश्रवणयोः समा-
नकालिकतयाऽन्वयेऽपि प्रयोज्यप्रयोजकभावेनाप्यन्वयः
यथा वा "गोविन्दे मथुरां याति व्यथन्ते गोपयोषित" इ-
त्यादौ गोविन्दगमनस्य स्वनागतकालिकतया गोपीव्य-
थायामन्वयेऽपि प्रयोज्यप्रयोजकभावेनाप्यन्वयः। एवं सूत्रे
भावलक्षणमित्यत्र भावः स्वभावः स्वरूपमिति यावत्
तथा च स्वरूपस्य लक्षणं विशिष्टतया ज्ञापनमित्यपि सू-
त्रार्थः अत एव गुणान्यत्वे सति जातेः सत्त्वादित्यादौ
न सप्तम्यनुपपत्तिः गुणान्यत्वसामानाधिकरण्येन वि-
शेषणेन जातेः सत्ताया वा विशिष्टतया ज्ञापनमिति
सप्तमी साधुरेव। अत्र शत्रन्तासधात्वर्थस्य वर्तमानका-
लवृत्तिसत्ताविशिष्टस्य तादात्म्येन गुणान्यत्वादावन्व-
यात् गुणान्यत्वादिशब्दानन्तरसप्तम्या अधिकरण-
वृत्तित्वमेवार्थस्तच्च जातौ सत्तादौ वाऽन्वेति वर्तमानका-
लवृत्तिसत्ताविशिष्टस्य तादात्म्यान्वयबलादेव गुणान्य-
त्वादिकालवर्तित्वस्यार्थत एव लाभात् न कालवृत्तित्वं
सप्तम्यर्थं इत्यधिकरणवृत्तित्वस्वरूपसप्तम्यर्थलाभार्थमेव
सतीतिशत्रन्तोपादानं न तु तदर्थस्य हेतुताऽवच्छेदकेऽनु-
प्रवेशः सामानाधिकरण्येन गुणान्यत्वविशिष्टजातित्वा-
देरेव तथात्वादिति दर्शितप्रयोगेऽपि सप्तम्युपपत्तिरिति।
वस्तु शरदि पुष्यन्ति सप्तच्छदा इत्यादावुत्पत्तिरूपस्य
ज्ञापनार्थमथ वा पुष्पोत्पत्तिमत्त्वविशिष्टसप्तच्छदत्वा-

वच्छेदेन शरदादिवृत्तित्वस्यान्वयार्थं कालभावयोरिति कुमारसूत्रेण काले सप्तम्या विध्यन्तरमन्यथा शरदि पुष्यन्ति पलाशा इत्यादिप्रयोगप्रसङ्गः शरद्वृत्तित्वस्य पलाशे पुष्पे वा सत्त्वादिति कालापैरुक्तम्। तदसत्। पुष्यत्यर्थे पुष्पोत्पत्तौ शरद्वृत्तित्वस्यान्वयोपगमादेव दर्शितप्रयोगवारणसम्भवात् कारकान्यसप्तम्यर्थस्य क्रियायां साक्षादन्वयोपगमात् शुक्तौ रजतत्वं जानातीत्यादौ विशेष्यतासंसर्गावच्छिन्नस्य शुक्त्याधेयत्वादेरिव ज्ञानादौ तथा च न काऽप्यनुपपत्तिरिति काले सप्तमीविध्यन्तरं निष्प्रामाणिकमेव शरदि पुष्यन्ति सप्तच्छदा इत्यत्र पुष्यतेः पुष्पोत्पत्तिरर्थस्तिङः पुष्पघटितपरम्परासंसर्गावच्छिन्नाश्रयत्वमर्थः सप्तम्याः कालिकसंबन्धावच्छिन्नाधेयत्वमर्थः तथा च शरद्वृत्तेः पुष्पोत्पत्तेरेवाश्रयाः सप्तच्छदा इत्यन्वयबोधः। एवं शरदि पुष्यन्ति पद्मिन्य इत्यादावप्यनया रीत्याऽन्वयो बोध्य इति न च पुष्यतेः पुष्पमर्थस्तिङ आश्रयत्वमत एव सप्तम्या उत्पत्तिरर्थ इति वाच्यम्। तथा सति माल्यं गुणो वा पुष्यतीतिप्रयोगापत्तेः न च पुष्यतेः पुष्पन्तिङ उत्पत्तिरर्थ उत्पत्तेः परम्परता प्रथमान्तार्थे सप्तम्यर्थस्याधेयत्वस्योत्पत्तावन्वय इति वाच्यम्। सुबर्थतिङर्थयोः परस्पराऽन्वयस्य सर्वैरनभ्युपेतत्वात् तिङर्थस्य प्रथमान्तार्थे साक्षादेवान्वयस्य व्युत्पन्नत्वाद् अन्यथा ज्ञानं सुखं द्वेषो वा पचतीतिप्रयोगप्रसङ्गात् तिङर्थकृतेः सामानाधिकरण्येन ज्ञानादेरन्वयसम्भवादिति पूर्वोक्तरीतिः श्रेयसीति। षष्ठ्या एव वैकल्पिकीं सप्तमीं ज्ञापयति। "षष्ठी

चानादरे" इति सूत्रम्। अनादरे अधिके भावलक्षणभाववतः षष्ठी भवति चकारात्सप्तमी भवतीत्यर्थकम्। रुदतो रुदति वा प्राव्राजीदित्यादौ षष्ठीसप्तम्योः पूर्वोक्तं कालवृत्तित्वमनादरोऽधिकस्तार्थः सोऽपि समानकालिकतया क्रियान्तरेऽन्वेति अनादरोऽवहेला सा च समीहितासिद्धिस्वरूपा रुदतः समीहितं तत्पुरुषस्य गार्हस्थ्यं प्रव्रज्याविरहो वा तदसिद्धिः प्रव्रजने सति भवत्यत्र तथा च रुदत्कालवृत्तिरुदत्समीहितस्य गार्हस्थ्यादेरसिद्धिकालिकी याऽतीतकालवृत्तिप्रव्रज्या तत्कर्तृत्वं वाक्यार्थः। अनादरस्य नोत्तरकालिकतयाऽन्वयः समीहितस्य प्रव्रज्याविरहस्याभावः प्रव्रज्या तत्स्वरूपं क्रियाऽन्तरं न तदुत्तरकालिकं भवतीत्यनुपपत्तिप्रसङ्गात्। यत्तु क्रोशन्तमनादृत्य प्राव्राजीदिति काशिकावृत्तावुक्तं तत्तु मुखं व्यादाय स्वपितीत्यादाविव ल्यपः समानकालिकत्वार्थकत्वाभिप्रायेण। एवं पश्यतो वा सुवर्णं हरतीत्यादौ हरणाभाव एव द्रष्टुः समीहितः। एवं यतमानानां यतमानेषु वा जयद्रथमवधीत्फाल्गुन इत्यादौ यतमानानां जयद्रथस्य रक्षणं वधाभावो वा समीहितः। यदुद्देश्यकेच्छाप्रयोज्या क्रिया क्रियान्तरं लक्षयति तस्येच्छोद्देश्यस्यासिद्धिः समीहितासिद्धिर्बोध्या तेन भुञ्जानस्य भुञ्जाने वा स्वर्णं हरतीति न प्रयोगः यतः स्वर्णहरणाभावोद्देश्यकेच्छाप्रयोज्या न भोजनक्रियेति तथाभूतेच्छाप्रयोज्या दर्शनक्रियेति पश्यति पश्यतो वा हरतीतिप्रयोगे रोदनादिक्रियायाः करुणोत्पादनद्वारा प्रव्रज्याविरहानुगुणत्वावगमात् प्रव्रज्यादिविरहोद्दे-

श्रयकेच्छाप्रयोज्यत्वं रोदनक्रियाया इति । अथ वा तथाभूतेच्छोद्देश्यस्य विरोधिनी क्रियाऽनादरस्तत्र क्रिया धात्वर्थस्तथाभूतेच्छोद्देश्यविरोध एव षष्ठीसप्तम्योरर्थः । विरोधस्तु एककालावच्छेदेनैकत्रावर्त्तमानत्वं तथा च इच्छोद्देश्यो यः प्रव्रज्याविरहादिः तद्विरुद्धमतीतकालवृत्ति प्रव्रज्यादिकं वाक्यार्थ इति । कतिपयशब्दयोगे षष्ठीसमानार्थिकां सप्तमीं ज्ञापयति ।"स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च" इति सूत्रम् । स्वामिन्नीश्वरअधिपतिदायादसाक्षिन्प्रतिभूप्रसूतइत्येतैश्शब्दैर्योगेषु षष्ठीसप्तम्यौ विभक्ती भवत इत्यर्थकम् । गवां गोषु वा स्वामी इत्यादौ षष्ठीसप्तम्योः स्वामित्वान्वयिनिरूपितत्वमर्थः गवां गोषु वा ईश्वर इत्यादावपि तदोरैश्वर्यान्वयितदेवार्थं ऐश्वर्यं स्वामित्वमेव । अथ वा ऐश्वर्यं सामर्थ्यं स्वत्वोत्पादकत्वं तत्र स्वत्वान्वय्याधेयत्वं तयोरर्थः गवां गोषु वाऽधिपतिरित्यादावधिपतिशब्दः स्वामिपर्यायस्तत्र स्वामिशब्दयोगवद्रीतिः । गवां गोषु वा दायाद इत्यादौ दायादशब्दस्य धनग्राहकोऽर्थस्तत्र धनान्वयितादात्म्यं तयोरर्थ इति । गवां गोषु वा साक्षीत्यादौ वृत्तान्तनिश्चयप्रमावान् साक्षिशब्दार्थस्तत्र वृत्तान्वयिसंबन्धस्तयोरर्थ इति । गवां गोषु वा प्रतिभूरित्यादावन्यकर्तृकावधिकालिकधनदानाभावप्रयोज्यधनदानकर्ता प्रतिभूशब्दार्थस्तत्र हितायधनान्वयितादात्म्यं तयोरर्थ इति । वादिनो वादिनि वा प्रतिभूरित्यादाववधिकालिकदर्शनकर्ता प्रतिभूशब्दार्थः तत्र दर्शनान्वयिविषयत्वं तयोरर्थ इति ।

गवां गोषु वा प्रसूतइत्यादौ प्रसवकर्मप्रसूतशब्दार्थस्तत्र प्रसवान्वयिविज्ञानानुगुणत्वं तयोरर्थ इति अत एव गवां गोषु वा प्रसूतइत्यत्र गा एवानुभवितुं जात इत्यर्थ इति शाब्दिकाः । वस्तुतस्तु प्रसवान्वयिधर्मोपार्जकत्वं तयोरर्थस्तथा च गोधर्मोपार्जकप्रसवकर्मेत्यन्वयबोधः गोधर्मो जाड्यादिः अत एव "तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तर" इत्यादौ तदन्वयधर्मः शुद्धिमत्त्वं प्रसूते द्विलोपि युक्तमिति । क्रियाप्रयोजकत्वार्थिकां षष्ठ्या सह सप्तमीं ज्ञापयति । "आयुक्तकुशलाभ्यां चासेवायामि"ति सूत्रम् आयुक्त इति कुशल इत्येताभ्यां शब्दाभ्यां योगे षष्ठीसप्तम्यौ विभक्ती भवत आसेवायां गम्यमानायामित्यर्थकम् । आसेवा तात्पर्यम् आयुक्तः कृष्णपूजनस्य कृष्णपूजने वा इत्यादौ व्यापृत आयुक्तशब्दार्थस्तत्र व्यापारान्वयिप्रयोजकत्वं षष्ठीसप्तम्योरर्थस्तथा च कृष्णपूजनप्रयोजकव्यापाराश्रय इत्यन्वयबोधः । कुशलः कृष्णपूजनस्य कृष्णपूजने वा इत्यादौ कुशलशब्दार्थो दक्षः स च पुनःपुनः कर्ता अत्रापि पुनः पुनः करणान्वयिप्रयोजकत्वमेव तयोरर्थ इति तथा च कृष्णपूजनप्रयोजकपुनःपुनःकरणाश्रय इत्यन्वयबोधः एवमेव आयुक्तः पटकरणस्य पटकरणे वा कुशलः पटकरणस्य पटकरणे वा इति कार्मिकोदाहरणेऽप्यन्वयो बोध्यः । यत्र क्रियान्तरतात्पर्यं नास्ति तत्र न षष्ठी यथा आयुक्तो गौः शकटे इत्यादौ अत्र न षष्ठी साधुः आयुक्त इत्यस्य ईषद्युक्तो ऽर्थस्तथा च यत्र व्यापृतादिरायुक्तादिशब्दार्थस्तत्र क्रियान्तरतात्पर्ये सति षष्ठी साधुरिति । निर्धारणा-

र्थिकां षष्ठ्या सह सप्तमीं ज्ञापयति। "यतश्च निर्धारणम्" इति सूत्रं यतो निर्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवत इत्यर्थकं निर्धारणं तु एकदेशस्य पृथग्भावः अत एव समुदायादेकदेशस्य पृथक्करणं निर्धारणमिति काशिकायामुक्तं गवां गोषु वा कृष्णा सम्पन्नक्षीरतमा नराणां नरेषु वा क्षत्रियः शूरतम इत्यादौ षष्ठीसप्तम्योर्निर्धारणमर्थं इति। अत्र केचित्। नराणां नरेषु वा क्षत्रियः शूरतम इत्यादौ विशेषान्यत्वं व्यावृत्तत्वं तादात्म्यं चेति त्रयः षष्ठीसप्तम्योरर्थाः। विशेषस्तु समभिव्याहृतक्षत्रियादिर्विशिष्य ग्राह्यः व्यावृत्तत्वं च भेदप्रतियोगित्वं तथा च क्षत्रियस्य नरविशेषतया क्षत्रियान्यत्वस्वरूपं विशेषान्यत्वं नरेऽन्वेति तथान्वितस्य नरस्य क्षत्रियान्यनरत्वावच्छिन्नाधिकरणतनिरूपिताधेयतया भेदे प्रतियोगित्वविशेषणीभूतेऽन्वयस्तथान्वितस्य भेदप्रतियोगित्वस्य शूरतमेऽन्वयः शूरतमस्य तादात्म्येन क्षत्रियेऽन्वयः प्रकृत्यर्थनरविशेषितस्य तादात्म्यस्य क्षत्रियेऽन्वयः तथा च क्षत्रियान्यनरत्वावच्छिन्नवृत्ति कभेदप्रतियोगित्ववत्शूरतमाभिन्नो नराभिन्नः क्षत्रिय इत्यन्वयबोधः। विशेषान्यत्वोपादानात् नराणां नरेषु वा क्षत्रियो द्विजातिरिति न प्रयोगः क्षत्रियान्यवृत्तिभेदप्रतियोगित्वस्य द्विजातौ विरहात् द्विजातिभेदस्य क्षत्रियान्यचाण्डालादिवृत्तित्वेऽपि क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकत्वविरहात् भेदप्रतियोगित्वस्यानुपादाने दर्शितवाक्यस्यायोग्यत्वप्रसङ्गः क्षत्रियान्यनरतादात्म्यस्य शूरतमे क्षत्रिये च बाधात् न च विशेषान्यत्वभेद-

प्रतियोगित्वयोरुभयोरपि नोपादानं व्यर्थत्वात् तादात्म्य-स्यैवोपादानमिति वाच्यम् । तथा सति नराणां क्षत्रि-यः प्राणीतिप्रयोगप्रसङ्गान्नरतादात्म्यस्य प्राण्यपि क्ष-त्रियेऽपि सत्त्वात् तादात्म्यस्यानुपादाने घटानां क्ष-त्रियः शूरतम इत्यादिप्रयोगप्रसङ्गः क्षत्रियान्यघटवृ-त्तिभेदस्य क्षत्रिये सत्त्वात् न च संख्यान्यसुबर्थस्य प्रकृ-त्यर्थविशेष्यत्वनियमात् क्षत्रियान्यत्वादिस्वरूपस्य षष्ठ्या-द्यर्थस्य प्रकृत्यर्थप्रकारत्वायोग इति वाच्यम् । संबोध्य-त्वादेः प्रथमार्थस्य प्रकृत्यर्थे प्रकारत्वोपगमेन दर्शितनि-यमे व्यभिचाराद्दर्शितनियमस्य प्रायिकत्वात् । न च नराणां क्षत्रियो द्रव्यमिति प्रयोगः स्यात् क्षत्रियान्यन-रत्वावच्छेदेन क्षित्याद्यवच्छिन्नप्रतियोगिताकद्रव्यभेदस्य सत्त्वादिति वाच्यम् । द्रव्यत्वादिविशिष्टे धर्मिणि द्रव्य-त्वाद्यवच्छिन्नस्यैव भेदप्रतियोगित्वस्य बोधने निर्धार-णाविभक्तेः समर्थत्वात् यद्यपि भेदः प्रतियोगित्वं च द्वयमेव निर्धारणविभक्तेरर्थौ युज्यते तावतैवाभिम-तनिर्वाहात् प्रतियोगितया क्षत्रियान्वितस्य विशेषण-तया नरेऽन्वयात्तथान्वितस्य नरस्य पुनर्भेदे प्रतियो-गितयाऽन्वयात्तथान्वितस्य भेदस्य निरूपकतया प्रति-योगित्वे तथान्वितस्य प्रतियोगित्वस्य शूरतमेऽन्वय-संभवात् तथापि क्षत्रियादेर्नामार्थस्य स्वार्थकनामोत्तर-विभक्त्यर्थ एव प्रकारतया भेदान्वयस्य व्युत्पन्नत्वात् नरादिनामान्तरोत्तरविभक्त्यर्थे तथा तदन्वयस्याव्यु-त्पन्नत्वात् न च नरस्य क्षत्रियः शूरतम इत्यादिनिर्धा-रणविभक्त्येकवचनप्रयोगः स्यादिति वाच्यम् । पाणि-

अथ सप्तमी ।

ङि:स्सुप इति त्रयः प्रत्ययाः । अत्र ङकारः पकारस्यानुबन्धः क्व चिदप्यश्रूयमाणत्वान्न वाचकताकुक्षिप्रविष्ट इति । सरसि सरसोः सरःसु वा सञ्चरतीत्यादौ श्रूयमाणत्र्यादिकारस्यैत्वेन ओसस्तत्त्वेन सोः सुत्वेन वाचकत्वम् । अनुशासनसिद्धस्य सप्तम्या अर्थः । अनुशासनं च "सप्तम्यधिकरणे चे"ति चकारात् दूरान्तिकार्थकशब्देभ्योऽपि सप्तमी भवति यथा दूरे विप्रकृष्टे सविधे अन्तिके इत्यादौ तत्राधिकरणमधिकरणत्वमाधेयत्वं वा सप्तम्या अर्थ इति वक्ष्यते । अधिकरणपदसङ्केतग्राहकं पूर्वमुक्तम् । "आधारोऽधिकरण"मिति सूत्रं कर्तृकर्मद्वारा क्रियाया आधारो अधिकरणसंज्ञः स्यादित्यर्थकम् । अनभिहितेऽधिकरणे सप्तमी भवति पचनी स्थालीत्यादौ न सप्तमी । अधिकरणादेः सप्तम्यर्थस्य कर्तृकर्मान्यतरद्वारकस्यैव क्रियायामन्वयात् कारकत्वं न तु कारकान्तरद्वारकाधिकरणस्य क्रियायामन्वयोऽभ्युपेयते । यदाहुः ।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।<br>
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥

इति उपकुर्वत्क्रियासहकारि निरधिकरणयोः कर्तृकर्मणोः क्रियासिद्ध्यनुपार्जकत्वादधिकरणस्य क्रियासिद्धिसहकारित्वं न च गगनमस्ति गगनं जानातीत्यादौ निरधिकरणस्य कर्तुः कर्मणश्च क्रियासिद्ध्युपयोगित्वान्नेदं युक्तमिति वाच्यम् । कालाधिकरणस्य गगनादेः सत्तादिक्रियाकर्तृत्वकर्मत्वयोगित्वाद् इदानीं

मगनमस्तीदानीं गगनं जानातीतिप्रत्ययात्। न चैवं काशीस्थो राजा मथुरायां ब्राह्मणेभ्यो ददाति गिरौ वृक्षात्पर्णमधो गच्छतीत्यादौ संप्रदानापादानाधिकरणयोः क्रियाविषयकप्रतीतिविषयत्वात् क्रियायां कुतो नान्वय इति वाच्यम्। निर्वर्त्यविकार्ययोरिव कर्मणः कर्तृत्वाविवक्षायां कर्मवद्भावस्येव कर्तृकर्माधिकरणयोरेव क्रियायामन्वयस्याचार्यैरभ्युपगमात्। तस्मात्कर्तृकर्मान्यतरद्वाराधिकरणं क्रियान्वयित्वात् कारकमिति। एवं कटे आस्ते चैत्रः गेहे पचति मैत्र इत्यादौ कर्तृघटितपरम्परासंसर्गावच्छिन्नमाधेयत्वं सप्तम्यर्थस्तच्च प्रकृत्यर्थविशेषितं व्यापारेऽन्वेति स्थाल्यामोदनं पचति चैत्रः तरौ फलं गच्छति शकुनिः इत्यादौ कर्मघटितपरम्परासंसर्गावच्छिन्नाधेयत्वं सप्तम्यर्थस्तच्च प्रकृत्यर्थविशेषितं फलेऽन्वेति। ननु दर्शिततत्तत्संसर्गावच्छिन्ननानाविधाधेयत्वस्य सप्तम्यर्थत्वे गौरवाद् अधिकरणमेव सप्तम्यर्थो लाघवात् अधिकरणस्य स्वनिरूपितेन तत्तत्संसर्गावच्छिन्नाधेयत्वेन संबन्धेन फलव्यापारयोरन्वयाभ्युपगमान्नानुपपत्तिरिति शाब्दिकमतमेव सम्यगिति चेन्मैवम्। अधिकरणताविशिष्टस्याधिकरणस्य तथात्वे गौरवादाधेयत्वस्य तथात्वे लाघवादित्यादेर्द्वितीयाविवरणे दर्शितत्वात् न चाधिकरणतात्वस्याखण्डोपाधितया शक्यतावच्छेदकलाघवादधिकरणत्वस्य तथात्वमस्त्विति वाच्यम्। परम्परान्वयिनोऽधिकरणत्वस्यापेक्षया साक्षादन्वयिन आधेयत्वस्यैव तथात्वौचित्यात्। न च नानासंसर्गावच्छिन्नत्वस्याधेयत्वे प्रवेशाद्गौरवमिति वा-

च्यम् । अधिकरणत्वादावपि तुल्यत्वात् यदि चाधिक-रणत्वादेर्नानासंसर्गावच्छिन्नाधेयत्वेन संबन्धेनान्वय इति मन्यते तदाऽऽधेयत्वमेव सप्तम्यर्थस्तस्य कर्तृघटित-परम्परावच्छिन्नाधेयत्वीयस्वरूपेण संबन्धेनान्वय इति नानुपपत्तिः इत्थं नियामकसंबन्धस्य प्रतियोगिताऽनव-च्छेदकत्वमतेऽधिकरणत्वादेः सप्तम्यर्थत्वं न युज्यते गेहे न पचति पक्ता वेत्यादौ निषेधप्रतीत्यनुपपत्तेरित्या-दिकं द्वितीयाविवरणे दर्शितम । फलव्यापारयोः स्वाश्र-यसंबन्धावच्छिन्नाधेयत्वस्य सप्तम्यर्थस्यान्वयोऽभ्युपेयते स्वाश्रयसंबन्धस्तु क्वचित्संयोगः यथा कटे आस्ते चैत्र इत्यादौ कर्तृसंयोगः स्थाल्यामोदनं पचतीत्यादौ कर्म-संयोगः क्वचित्समवायः यथा घटे रूपमस्तीत्यादौ क-र्तृसमवायः अमुष्मिन् गां विक्रीणीत इत्यादौ कर्मणो गोः स्वामित्वं तथा घटे नीलरूपं करोतीत्यादौ कर्म-समवायः क्वचित्कालिकविशेषणता यथा पौर्णमास्यां चन्द्रं ग्रसते राहुरित्यादौ कर्तृकर्मणोः कालिकविशे-षणता यथा क्वचिद्वू विषयता इच्छा मोक्षेऽस्तीत्यादौ कर्तृविषयता घटे चाक्षुषं जनयति सूते वा चक्षुषा-नित्यादौ कर्मविषयता क्वचिदन्यादृशोऽपि स्वाश्रयसं-बन्धः प्रयोगानुसाराद्बोध्यः । अपादानादेः फलव्यापा-रयोरनधिकरणत्वात्तदधिकरणनिरूपितस्य दर्शितसं-बन्धावच्छिन्नाधेयत्वस्याप्रसिद्धेरपादानादधिकरणस्य न कारकत्वमित्यतः कर्तृकर्मणोरेवाधिकरणयोः कारक-त्वमाचार्या मन्यन्ते । गुरुचरणास्तु कटे आस्ते चैत्र इ-त्यादौ संयोगावच्छिन्नमाधेयत्वं कर्तृनिष्ठं स्थाल्या-

मोदनं पचतीत्यादौ संयोगावच्छिन्नमाधेयत्वं कर्मनिष्ठं सप्तम्यर्थः कर्तृकर्मनिष्ठयोराधेयत्वयोः सामानाधिकरण्येन संबन्धेन व्यापारफलयोरन्वय इत्यपादानादिनिष्ठाधेयत्वस्य सामानाधिकरण्येन धात्वर्थेऽन्वयासम्भवान्नापादानाद्यधिकरणस्य कारकत्वमिति एवमाधेयत्वं क्वचिदाख्यातोपस्थापितकालावच्छिन्नं सप्तम्या प्रत्याय्यते यतो गेहान्निर्गत्य प्राङ्गणे पचमाने चैत्रे गेहे चैत्रः पचतीति न प्रयोगः क्वचिदन्यकालावच्छिन्नमप्याधेयत्वं तथा यथा भाविनीं देवाधिकरणतामभिसन्धाय चैत्रो ग्रामे गच्छतीति प्रयुज्यते। आतपे तिष्ठतीत्यादौ आतपपदमातपसंयुक्तदेशपरमतो नानुपपत्तिः सविषयकार्थधातुयोगे विशेष्यतानिरूपितप्रकारत्वस्वरूपं वैज्ञानिकमाधेयत्वं सप्तम्यर्थः यथा शुक्तौ रजतत्वं जानातीत्यादौ शुक्तिनिष्ठविशेष्यतानिरूपितप्रकारत्वं रजतत्वाद्यात्मककर्मघटितपरम्परया ज्ञानादावन्वेतीति पदवाक्यरत्नाकरे प्राहुः। सप्तमीविधाने "क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानमि"ति वार्तिकं क्तान्तप्रकृतिकेनिप्रत्ययोगे कर्मणि सप्तमीं विधत्ते । कर्मणि सप्तमीविधानं नित्यमित्येके । वैकल्पिकमित्यन्ये । अधीती वेदेषु वेदानित्यादौ "इष्टादिभ्यश्चे"ति सूत्रेण विहितस्य तद्धितेनिप्रत्ययस्य कर्ताऽर्थः सप्तमीद्वितीययोः कर्मत्वमर्थस्तथा च वेदकर्मताकाध्ययनकर्तेत्यन्वयबोधः। एवमिष्टी सुरेषु सुरानित्यादौ संप्रदानत्वस्वरूपं कर्मत्वं सप्तमीद्वितीययोरर्थस्तथा च सुरसंप्रदानताकयजनकर्तेत्यन्वयबोधः । परिगणिती याज्ञिके याज्ञिकं वे-

पादस्य पाणिः पवित्र इत्यादावेकवचनवदन्यत्रापि नि-र्धारणविभक्त्येकवचनप्रयोगे क्षतिविरहात् अत एव "द्वन्द्वः सामासिकस्य चे"ति गीतावाक्यमपि सङ्गच्छते । ननु पाथःपृथिव्योर्जलं स्नेहवदित्यादौ जलभिन्नयोः पाथःपृथिव्योरप्रसिद्ध्या पाथःपृथिव्युभयवृत्तिभेदप्रति-योगित्वस्य स्नेहवति बाधेन च जलान्यपाथःपृथिव्यु-भयत्वावच्छिन्नवृत्तिभेदप्रतियोगिनः स्नेहवतो बोधासं-भवः न च द्विपदद्वन्द्वोत्तरनिर्धारणविभक्तेरन्यतरवृत्ति-भेदप्रतियोगित्वमेवार्थस्तन्निविष्टे चान्यतरस्मिन्नेवैक-पदोपात्तत्वेन जलान्यत्वादेः षष्ठ्यर्थान्तरस्यान्वयस्त-था च जलान्यो यः पाथःपृथिव्योरन्यतरस्तन्निष्ठभे-दप्रतियोगित्वं स्नेहवति वर्तत एवेति वाच्यम् । ता-वताऽपि पाथःपृथिव्युभयतादात्म्यस्य जले बाधेनोक्त-वाक्यस्यायोग्यत्वतादवस्थ्यात् पाथःपृथिव्योस्तेज उष्ण-मित्याद्यप्रयोगेण निर्धारणविभक्तेः तादात्म्यवाचिता-ध्रौव्यात् घटतद्भिन्नयोर्घटः कम्बुग्रीवादिमानित्यादौ घ-टतद्भिन्नान्यतराप्रसिद्ध्या तादृशेतरभेदस्य बोधयितुम-शक्यत्वादिति चेन्न द्वन्द्वोत्तरनिर्धारणषष्ठ्याः पर्याप्तसं-ख्याश्रयेऽपि शक्तत्वेन तस्मिन्नेवैकपदोपात्तत्वेन षष्ठ्यर्थस्य जलान्यत्वरूपनिर्धार्यभेदस्यान्वयेन सर्वसामञ्जस्यात्पाथः-पृथिव्योर्जलं स्नेहवदित्यादौ जलभिन्नो यः पाथःपृथिवी-पर्याप्तसंख्याश्रयस्तत्त्वावच्छिन्नवृत्तिकभेदस्य प्रतियोगि-स्नेहाभिन्नं पाथःपृथिवीपर्याप्तसंख्याश्रयो जलमित्य-न्वये बाधकाभावात् यत्र तूद्देश्यविधेययोर्न तादात्म्येना-न्वयबोधसामग्री किं तु संबन्धान्तरेण तत्र निर्धारण-

विभक्तेरत्यन्ताभावप्रतियोगित्वमर्थः यथा नराणां क्षत्रिये शौर्यमित्यादौ अत्र क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकात्यन्ताभावस्य प्रतियोगित्वं शौर्ये प्रतीयते न तु तादृशभेदस्य तथासति नराणां क्षत्रिये रूपमित्यादिप्रयोगापत्तेः नराणां मध्ये क्षत्रियः शूरतम इत्यादौ निर्धारणवाचिनो मध्य इत्यव्ययस्य निर्धारणविभक्त्या सह सम्भेदे हे चैत्रेत्यादाविव नान्यतरवैयर्थ्यमिति वदन्ति। तच्चिन्त्यम्। क्षत्रियान्यत्वादेर्निर्धारणेऽनुप्रवेशे निर्धारणविभक्तेर्नानार्थताऽऽपत्तेः यत्र चापूर्वो वाक्यार्थस्तत्र मित्रातनयानां माधवः पण्डित इत्यादौ माधवान्यत्वस्यापूर्वतया तत्र निर्धारणविभक्तिवाच्यत्वस्यायहेणान्वयबाधानुपपत्तिप्रसङ्गात् द्रोणैकलव्यकालयवनाद्यवृत्तेः शूरतमभेदस्य क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकत्वबाधाद्दर्शितवाक्यस्यायोग्यत्वप्रसङ्गाच्च किं च पर्याप्तसंख्याश्रये विभक्तिवाच्यत्वाभ्युपगमेऽपि तत्र विशेषान्यत्वान्वयो न युक्तस्तथासति धवखदिरयोर्धवखदिरौ छेद्यावित्यादिप्रयोगापत्तेः पर्याप्तसंख्याश्रये धवान्यत्वखदिरान्यत्वयोरन्वयसम्भवात्। न च द्वन्द्वस्थले निर्धारणविभक्तेरिव निर्धार्यपदोत्तरविभक्तेरपि पर्याप्तसंख्याश्रयोऽर्थस्तत्रैव निर्धारणान्वय इति वाच्यम्। तथासति पाण्डवानां युधिष्ठिरभीमार्जुनाः कौन्तेया इत्यादौ निर्धार्ययुधिष्ठिरादौ निर्धारणान्वयप्रसङ्गात् भिन्नभिन्नसुबर्थयोः परस्परान्वयस्याव्युत्पन्नत्वाच्च। यत्तु नराणां क्षत्रियः शूरतम इत्यादौ राहोः शिर इत्यत्रेवाभेद एव षष्ठ्यर्थः स च क्षत्रियादावन्वेति तदन्विततदन्वयि-

तावच्छेदकक्षत्रियत्वावच्छेदेन शूरतमस्य तादात्म्ये-
नान्वयस्तथा च नराभिन्नक्षत्रियत्वावच्छेदेन शूरतमस्या-
भेदो वाक्यार्थस्तेन नराणां क्षत्रियोऽर्जुन इत्यादिको न
प्रयोगः । न वा नराणां कीशः पशुरित्यादिकस्य प्रयोगः
कीशे मानुषाभेदस्य विरहादिति तन्तुच्छं नराणां क्ष-
त्रियः प्राणी क्षत्रियाणां नरः शूर इत्यादिप्रयोगापत्तेः ।
यदपि नराणां क्षत्रियः शूर इत्यादौ भेदोऽभेदश्च नि-
र्धारणविभक्तेरर्थः प्रकृत्यर्थे विशेषणीभूय भेदो भेदे विशे-
षणीभूय प्रतियोगी क्षत्रियादिरन्वेति व्युत्पत्तिवैचित्र्येण
भेदे पुनः प्रतियोगितया विशेषणान्तरस्य शूरादेर-
न्वयः शूराद्यन्वितभेदस्तु क्षत्रियादिभेदान्वितप्रकृत्यर्थ-
तावच्छेदकावच्छेदेन विधेयतयाऽन्वेति प्रकृत्यर्थविशे-
षितोऽभेदः क्षत्रियादावन्वेति प्रकृत्यर्थाभेदान्विते क्ष-
त्रिये शूरस्य तादात्म्येनान्वयस्तथा च क्षत्रियान्यो नरः
शूरभिन्नः नराभिन्नः क्षत्रियः शूर इति मुख्यविशे-
ष्यताद्वयशाली समूहालम्बनाकारो द्विविधो वाऽन्वय-
बोध इति । तदसत् । नामार्थमुख्यविशेष्यकान्वयबोधे ना-
मार्थस्य प्रथमान्तार्थतानियमपरित्यागापत्तेः संख्या-
न्यसुदर्थविशेषणकप्रातिपदिकार्थविशेष्यकान्वयबोधस्या-
व्युत्पन्नत्वात् एकपदोपस्थाप्यस्य भेदस्योद्देश्यतावच्छेद-
कविधेयभावेन कथमप्यन्वये व्युत्पत्तिविरहाच्च इत्थं च
निर्धारणमव्याहृशं बोध्यं तथा हि भेदप्रतियोगिताऽव-
च्छेदकधर्मवत्त्वं प्रकृत्यर्थतावच्छेदकत्वोपलक्षितधर्मसा-
मानाधिकरण्यं च द्वयमेव षष्ठीसप्तम्योरर्थः दर्शितसामा-
नाधिकरण्यं तु प्रतियोगितावच्छेदकेऽन्वेति एकपदोपा-

त्त्वयोरपि तिङर्थकृतिवर्तमानत्वयोरिव लिङर्थे बलवद्-
निष्टाननुबन्धित्वेष्टसाधनत्वयोरिव परस्परान्वयस्य
व्युत्पत्तिसिद्धत्वात् एवं नराणां नरेषु वा चत्रियः शूर-
तम इत्यादौ भेदप्रतियोगितावच्छेदकधर्मः प्रकृत्यर्थ-
तावच्छेदकसामानाधिकरण्यं च षष्ठीसप्तम्योरर्थः तत्र
दर्शितसामानाधिकरण्यं भेदप्रतियोगितावच्छेदकधर्मे-
ऽन्वेति तथान्वितः स धर्मः चत्रियादावपरपदार्थेऽन्वेति
भेदे प्रकृत्यर्थतावच्छेदकनरत्वादौ च विभक्त्यर्थैकदेशे
प्रकृत्यर्थस्याधेयतयाऽन्वयः चत्रियादौ विशेषणपदार्थस्य
शूरतमादेः तादात्म्येनान्वयः शौर्यादिधर्मस्वरूपस्य वि-
शेषणस्य संबन्धान्तरेण तथा च नरवृत्तिनरत्वसमाना-
धिकरणो नरवृत्तिभेदप्रतियोगितावच्छेदको यस्तद्वान्
चत्रियः शूरतम इत्यन्वयबोधः। नराणां नरेषु वा च-
त्रिये शौर्यं चत्रियस्यायुधजीवनमित्यादौ दर्शितनि-
र्धारणान्वितस्य चत्रियस्याधेयत्वं शौर्ये संबन्ध आयुध-
जीवने चेति अत्र भेदप्रतियोगितावच्छेदकोऽन्वयिता-
वच्छेदकीभूतयद्धर्मावच्छेदेन भासते भेदप्रतियोगिताव-
च्छेदकत्वेन स एव धर्मो भासते यथा सत्तावन्ति स-
र्वाणि निखिलजातिव्यापकजातिमन्ति सकलजातिव्या-
पकजातिमन्ति सत्तावन्ति वेत्यादौ सकलजातिव्याप-
कजातित्वेन सत्तैव भासते तथा प्रकृते चत्रियत्वादि
रन्वयितावच्छेदक एव भेदप्रतियोगितावच्छेदकत्वेन
भासत इति व्युत्पत्तिरत एव चत्रियस्य चत्रियनिष्ठभेद-
प्रतियोगितावच्छेदकीभूतचत्रियत्वेनोभयत्ववत्त्वेऽपि च-
त्रियाणां चत्रियः शूर इत्यादिको न प्रयोगः न वा

द्रव्यस्य तथाभूतत्वाद्द्रव्योभयत्ववत्त्वेऽपि नराणां द्रव्यं शौर्यवदित्यादिकप्रयोगः प्रतियोगितावच्छेदकत्वं प्रतियोगितावच्छेदकधर्मसमनियतत्वं बोध्यम् अतः पार्थिवपाचाणां कम्बुग्रीवादिमज्जलाहरणमित्यादिप्रयोगस्य नानुपपत्तिः कम्बुग्रीवादिमत्त्वादेरन्वयितावच्छेदकस्य प्रतियोगितावच्छेदकत्वविरहेऽपि प्रतियोगितावच्छेदकीभूतघटत्वादिसमनियतत्वात् तथा चान्वयितावच्छेदकसमनियतो धर्म एव भेदप्रतियोगितावच्छेदकत्वेन प्रकृते भासत इति व्युत्पत्तिरेतदर्थमेव भेदप्रतियोगित्वमपहाय भेदप्रतियोगितावच्छेदको निर्धारणेऽनुप्रवेशितः यदि च प्रतियोगित्वमतिरिक्तपदार्थस्तथापि विशेषप्रतियोगितातोऽतिरिक्तं सामान्यधर्मावच्छिन्नप्रतियोगित्वमिति मन्यते तदापि अन्वयितावच्छेदकसमनियतधर्मावच्छिन्नप्रतियोगित्वलाभार्थं प्रतियोगितावच्छेदकस्यानुप्रवेशस्तथा च भेदप्रतियोगित्वमेव निर्धारणविभक्तेरर्थः भेदप्रतियोगितात्वेनान्वयितावच्छेदकसमनियतधर्मावच्छिन्ना प्रतियोगिताव्यक्तिरेव भासत इति व्युत्पत्तिः भेदप्रतियोगित्वे तदवच्छेदके वा प्रकृत्यर्थतावच्छेदकसामानाधिकरण्यस्यान्वयोपगमात् ब्राह्मणानां क्षत्रियः शूर इत्यादिको न प्रयोगः ब्राह्मणत्वसमानाधिकरणस्य ब्राह्मणवृत्तिभेदप्रतियोगित्वस्य क्षत्रिये विरहात् । न च दर्शितप्रयोगवारणार्थं निर्धारणविभक्तेस्तादात्म्यमर्थोऽस्तु तादात्म्यस्य क्षत्रियादावन्वय इति न काप्यनुपपत्तिरिति वाच्यम् । तथासति नराभेदविशिष्टे क्षत्रिये शूरस्य तादात्म्येन विधेयत्वोपगमेन

राभेदस्य क्षत्रियविशेषणत्वे वैयर्थ्यप्रसङ्गात् । एवं नि-
र्धार्यतावच्छेदकधर्मसमानाधिकरणात्यन्ताभावप्रतियो-
गितावच्छेदकधर्मवान् निर्धार्यतावच्छेदकव्याप्यनाना-
धर्मसमानाधिकरणश्च यो धर्मस्तद्वान् तादात्म्येन स च
धर्मः संबन्धान्तरेण निर्धार्येऽन्वेतीतिव्युत्पत्तिः धर्मवदि-
त्यन्तोपादानात् नराणां क्षत्रियो द्विजातिः प्राणी वे-
त्यादिको न प्रयोगः द्विजातित्वादेः क्षत्रियवृत्त्यत्यन्ता-
भावप्रतियोगितावच्छेदकत्वविरहात् समानाधिकरण इ-
त्यन्तोपादानात् नराणां नरेषु वा क्षत्रियोऽर्जुन इत्या-
दिको न प्रयोगः अर्जुनत्वस्य क्षत्रियत्वव्याप्यनानाधर्म-
सामानाधिकरण्य विरहात् नानाधर्मोऽपि परस्परवि-
रुद्धो ग्राह्यस्तेनार्जुनत्वस्य क्षत्रियत्वव्याप्यगुणकर्मादिना-
नाधर्मसमानाधिकरणत्वेऽपि न दर्शितप्रयोगः न च नि-
र्धार्यतावच्छेदकावच्छेदेन विधेयान्वयोपगमादेव न द-
र्शितप्रयोगः अर्जुनत्वादेर्विधेयस्य निर्धर्मितावच्छेदक-
क्षत्रियत्वावच्छेदेनान्वयासम्भवादिति समानाधिकरणा-
न्तोपादानं व्यर्थमेवेति वाच्यम् । तथासति नराणां न-
रेषु वा क्षत्रियः शूरतम इत्यादिप्रयोगानुपपत्तिप्रस-
ङ्गात् शूरतमादेर्विधेयस्य क्षत्रियत्वावच्छेदेनान्वयास-
म्भवात् रणभीतक्षत्रियादौ शूरतमतादात्म्यविरहेणा-
योग्यत्वात् तादृशधर्मसामानाधिकरण्यं तु विधेये त-
त्त्वावच्छेदके वा तत्रैव तत्त्वं यत्र परस्परविरुद्धनानाधर्म-
समानाधिकरणमुद्देश्यतावच्छेदकं भवति तेन पाण्ड-
वानां धनञ्जयोऽहं गाण्डीवी वेत्यादौ धनञ्जयत्वव्या-
प्यपरस्परविरुद्धनानाधर्मस्याप्रसिद्ध्या अहंत्वस्य गा-

गाण्डीवित्वस्य तादृशधर्मसामानाधिकरण्याप्रसिद्धयाऽपि नान्वयानुपपत्तिः न चैवं क्षत्रियाणां धनञ्जयो गाण्डीवी-त्यादिप्रयोगः स्यादिति वाच्यम् इष्टत्वात् यदि च द्रव्या-णां क्षत्रियः शूर इत्यादिकः प्रयोगो नेष्यते तदा निर्धा-र्यताऽवच्छेदके निर्धारणविभक्तिप्रकृत्यर्थतावच्छेदकस्य साक्षाद्व्याप्यत्वं तत्र तन्त्रमिति मन्तव्यं न हि क्षत्रियत्वा-दिकं द्रव्यत्वसाक्षाद्व्याप्यं द्रव्यत्वव्याप्यपृथिवीत्वादिव्याप्य-त्वात् भवति च नरत्वसाक्षाद्व्याप्यमिति दर्शितप्रयोग दृष्यते न च नरत्वव्याप्यत्वात् क्षत्रियत्वस्य न नरत्वसा-क्षाद्व्याप्यत्वमिति कथं दर्शितप्रयोग इति वाच्यं क्षत्रिय-त्वस्य द्विजातित्वाव्याप्यत्वात् संस्कारविशेषरूपस्य द्वि-जातित्वस्याकृतसंस्कारकमृतक्षत्रिये विरहात् न च द्वि-जातीनां क्षत्रियः शूर इत्यादिकः प्रयोगो न स्या-दिति वाच्यम्। इष्टत्वात् अत एव क्षत्रियादिपदसम-भिव्याहारे द्विजातीनामिति निर्धारणविभक्तिर्न किन्तु नराणामित्येव यदि च द्विजातित्वव्याप्यत्वेऽपि नरत्व-व्याप्यजात्यव्याप्यत्वात् जातिघटितं नरत्वसाक्षाद्व्याप्य-त्वं क्षत्रियत्वे नानुपपन्नमिति नराणामित्यादिदर्शितप्र-योगो नानुपपन्नस्तदा द्विजातीनामित्यादिदर्शितप्र-योगोऽपीष्ट एवात्र व्याप्यता न तन्त्रमिति वच्यते। ननु पाथःपृथिव्योः पृथिवी गन्धवतीत्यादावन्वयानुपपत्तिः पृथिवीवृत्तिभेदप्रतियोगित्वस्य पृथिवीत्वसमनियतधर्मा-वच्छिन्नस्य पृथिव्यामसत्त्वात् जलनिष्ठभेदप्रतियोगित्वस्य तादृशस्य पृथिव्यां सत्त्वेऽपि तादृशप्रतियोगित्वे जलत्व सामानाधिकरण्यविरहात् यद्धर्मावच्छिन्ननिष्ठभेदप्रति-

योगित्वं निर्धारणं तत्र तद्धर्मसामानाधिकरण्यान्वय-स्यैव व्युत्पत्तिसिद्धत्वात् अन्यथा जलानां पृथिवी गन्ध-वतीत्यादिप्रयोगः स्यादिति चेन्न भेदप्रतियोगित्वे प्रकृ-त्यर्थतावच्छेदकसामानाधिकरण्यान्वयस्य विवक्षितत्वात् इन्द्रस्यति प्रकृत्यर्थतावच्छेदकस्य नानात्वादन्वयोपपत्तेः तथा हि प्रकृते जलत्वं पृथिवीत्वं च द्वयं प्रकृत्यर्थताव-च्छेदकं तत्र जलत्वावच्छिन्नस्याधेयतया भेदे पृथिवी-त्वसामानाधिकरण्यस्य भेदप्रतियोगित्वेऽन्वयो निरा-बाध इति। जलानां पृथिवीत्यादौ तु जलत्वस्यैकस्य प्रकृत्यर्थतावच्छेदकत्वात् जलनिष्ठभेदस्य प्रतियोगित्वे पृथिवीत्वसमनियतधर्मावच्छिन्ने जलत्वसामानाधिकर-ण्यविरहात् नान्वयोपपत्तिरिति। ननु जलपृथिव्योः पृ-थिवी गन्धवतीत्यत्र पृथिवीत्वे जलत्वव्याप्यत्वविरहात् पृथिवीत्वस्य व्याप्यतायाः सत्वेऽपि तत्साक्षाद्व्याप्यत्व-विरहात् तदन्यत्वे सति तद्व्याप्यत्वविशिष्टस्य तद्व्या-प्यत्वस्य तत्साक्षाद्व्याप्यत्वस्य तदन्यत्वविरहेण विशि-ष्टाभावसत्त्वादिति कथं पृथिवीत्वस्य जलनिष्ठभेदप्र-तियोगित्वान्वयितावच्छेदकत्वमिति चेन्न यतस्तद-न्यस्य तद्व्याप्यस्य व्याप्यत्वे सति तदन्यतद्व्याप्यत्वं साक्षाद्व्याप्यत्वं तत्र विशेष्यदले तदन्यत्वं प्रकृते न प्रवेशनीयं तथा च पृथिवीत्वसाक्षाद्व्याप्यत्वं पृथिवीत्वे निराबाधमिति नान्वयितावच्छेदकत्वहानिरिति। न-न्वेवं निर्धारणविभक्तिप्रकृत्यर्थतावच्छेदकसाक्षाद्व्याप्य-त्वस्य निर्धारणान्वयितावच्छेदकत्वे तन्नत्वेऽभ्युपगमे तत एव ब्राह्मणानां क्षत्रियः शूरः जलानां पृथिवी गन्धव-

वतीत्यादिप्रयोगवारणं चत्रियत्वादावन्वयितावच्छेदके ब्राह्मणत्वादिप्रकृत्यर्थतावच्छेदकव्याप्यत्वविरहात् इ-त्थं च निर्धारणे प्रकृत्यर्थतावच्छेदकसामानाधिकरण्य-प्रवेशो व्यर्थ इति चेन्न यतो यत्र प्रकृत्यर्थतावच्छेदका-न्वयितावच्छेदकयोः साजात्यं तत्रैव साचाद्व्याप्यत्वं तन्त्रं न तु तयोर्वैजात्ये साजात्यं तु जातित्वादिना बो-ध्यमिति द्रव्याणां चत्रिय इत्यादिको न प्रयोगः वैजा-त्ये तु न साचाद्व्याप्तता तन्त्रं यथा गवां गोषु वा कृ-ष्णा संपन्नचीरतमेत्यादौ अत्र प्रकृत्यर्थतावच्छेदकस्य गोत्वस्यान्वयितावच्छेदके कृष्णगुणे साजात्यविरहात् न साचाद्व्याप्यताविरहेणान्वयविरह इति। एवं च हं-सानां कृष्णः सुचेष्टः नराणां चतुष्पादो मदोत्कट इ-त्यादिप्रयोगवारणार्थं प्रकृत्यर्थतावच्छेदकसामानाधि-करण्यस्य निर्धारणे प्रवेशः अन्यथा हंसादिवृत्तिभेदप्र-तियोगित्वस्य कृष्णगुणादिमति सत्त्वाद्दर्शितप्रयोगस्य दु-र्वारताऽऽपत्तेः तदिदं निर्धारणं जात्या गुणेन क्रियया-ऽन्येनापि धर्मेण भवति तत्र जात्या नराणां नरेषु वा चत्रिय इत्यादिकं गुणेन गवां गोषु कृष्णेत्यादिकं क्रियया गवां गोषु वा वत्सं धावन्ती दुग्धवतीत्यादिकं अत्र वत्सकर्मकधावनक्रियावत्त्वमन्वयितावच्छेदकं गो-निष्ठभेदप्रतियोगितावच्छेदकमिति अन्येन प्राणिनां प्राणिषु वा चतुष्पादः पशुरित्यादिकमुदाहरणं बोध्यं जातिक्रियागुणभिन्नमत्र चतुःसंख्यकपादसमवेतत्वमन्व-यितावच्छेदकं प्राणिनिष्ठभेदस्य प्रतियोगितावच्छे-दकमिति। अत एव काशिकायां जातिगुणक्रियाभि-

रिति पृथक्करणस्य करणाभिधानं स्वरूपकथनं न च प-रिसंख्यानमिति। यत्र प्रकृत्यर्थतावच्छेदकनिर्धार्यतावच्छेदकयोः वैजात्यं तत्र परस्परव्यभिचारित्वेनान्वयितावच्छेदकत्वे तन्त्रमतो द्रव्याणां कृष्णा सम्पन्नक्षीरतमेत्यादिको न प्रयोगः प्रयोगस्तु कृष्णानां गौः सम्पन्नक्षीरतमा द्विजातीनां क्षत्रियः शूरतम इत्यादिक उपपद्यते। हरीणां हरिषु वा शत्रुः सुरश्रेष्ठ इत्यादौ हरिपदार्थतावच्छेदकं सूर्यत्वविष्णुत्वेन्द्रत्वादिकं नानाविधमेव प्रकृत्यर्थतावच्छेदकं तत्र शक्रान्यप्रकृत्यर्थनिष्ठभेदस्य प्रतियोगित्वेऽन्वयितावच्छेदकीभूतशक्रत्वावच्छिन्ने शक्रत्वसामाधिकरण्यान्वयसम्भवात् द्वन्द्वस्थले इवैकशेषेऽपि नानुपपत्तिरिति। द्वन्द्वः सामासिकस्य चेत्यत्र समासत्वस्यानुगतधर्मतया जातित्वात् जातिगतैकत्वविवक्षायामेकवचनमिति नानुपपत्तिः "जात्याख्यायामि"ति सूत्रे अनुगतधर्मस्यैव जातित्वेनोपादानमत एव "शरीरमाद्यं खलु धर्मसाधनमि"ति सङ्गच्छते यतः शरीरत्वं न वैशेषिकसंमता जातिर्न वैकमात्रशरीरं धर्मसाधनमित्यनुगतधर्मस्वरूपजातिगतैकत्वविवक्षायामेकवचनोपपत्तिः। "नक्षत्राणां शश्यहमि"त्यादौ नक्षत्रपदस्य शशियुक्तनक्षत्रसमुदाये लक्षणायां निर्धारणे अन्यथा शेषे स्वस्वामिभावे षष्ठी। एवं "वित्तेशो यक्षरक्षसामि"त्यत्र यदि धनेशो यक्षस्तदा जलपृथिवी गन्धवतीत्यादाविव निर्धारणेऽन्यथा शेषे स्वस्वामिभावे षष्ठीति एवमन्यत्रापि बोध्यम्। एवं नराणां मध्येऽइत्यव्ययस्य भेदप्रतियोगित्वं समभिव्याहृतशब्दार्थतावच्छेदकसा-

साधिकरणपं चार्थः षष्ठ्या भेदान्वयी समभिव्याहृतश-
ब्दार्थतावच्छेदकान्वयी च संबन्धोऽर्थः संबन्धस्तु प्रकृते
आधेयत्वमेव भेदप्रतियोगित्वमन्वयितावच्छेदकसम-
नियतधर्मावच्छिन्नं पूर्ववद्बोध्यम् इत्थं मध्यशब्दयोगे षष्ठी
न निर्धारणार्थिका किं तु शेषार्थिका अत एव "लोके-
शलोकेशयलोकमध्ये तिर्यञ्चमध्यञ्च मुधानभिज्ञरसज्ञतो-
पज्ञसमज्ञमज्ञमि"त्यादौ समास उपपद्यते अन्यथा नि-
र्धारणषष्ठ्यन्तेन सह समासस्य निषेधात्तदनुपपत्तिप्रसङ्गः
एवं नरमध्ये क्षत्रियः शूर इत्यादिप्रयोगानुपपत्तिप्रसङ्ग
इति। अर्चार्थिकां सप्तमीं दर्शयति । "साधुनिपुण"
इत्येताभ्यां योगे अर्चायामर्थे सप्तमी विभक्तिर्भवति प्रते-
र्योगे न भवतीत्यर्थकं मातरि साधुर्निपुणो वेत्यादौ
समर्थः साधुशब्दार्थः सामर्थ्यं जनकतावच्छेदकधर्मवत्त्वं
तदेव स्वरूपयोग्यत्वमिति सावहितकृती निपुणशब्दा-
र्थः सावहितकर्तृत्वमप्रमत्तकर्तृत्वं तदपि कर्त्तव्यतागो-
चरपुनःपुनःस्मरणाधीनकृतिमत्त्वं तत्र सप्तम्यर्थोऽर्चा
सामर्थ्यैकदेशे जनकत्वे निरूपकतया निपुणपदार्थैक-
देशे तादृशस्मरणाधीनकृतौ विषयितयाऽन्वेति। अर्चा
तु प्रीत्यनुकूलो व्यापारस्तत्र प्रीतौ प्रकृत्यर्थस्य समवेत-
त्वेनान्वयः प्रीतिः सुखं सुखसाधनं वा तथा च मातृ-
समवेतप्रीत्यनुकूलव्यापारनिरूपितजनकतावच्छेदकध-
र्मवान् मातृसमवेतप्रीत्यनुकूलव्यापारविषयिणी क-
र्तव्यतागोचरपुनःपुनःस्मरणाधीना या कृतिस्तद्वानिति
वा शाब्दबोधः अर्चायां गम्यमानायामिति काशि-
कायामुक्तम् । अत्र सूत्रे अर्चा सप्तम्यर्थत्वेनैव वि-

वक्षिता न तु मानान्तरगम्यत्वेन तथासति "साध्वसाधुप्रयोगे सप्तमी वक्तव्ये"ति वार्तिके साधुशब्दोपादानस्य वैयर्थ्यापत्तेः मातरि साधुरित्यत्र मातृप्रियकारित्वावगमे मात्वर्चाया अवश्यं गम्यमानत्वात्सप्तम्या अर्चार्थकत्वे तु वार्तिके साधुशब्दोपादानस्य न वैयर्थ्यमिति प्रागुक्तम् अर्चाया अविवक्षणे सप्तमी न साधुः यथा साधुः भृत्यो राज्ञ इत्यादौ अत्र तत्त्वकथने सप्तमी न भवति । अत्र भृत्यस्य साधुत्वमात्रप्रतिपादकत्वं अर्चार्थिकाऽपि सप्तमी प्रतियोगे न भवति यथा मातरं प्रति साधुरित्यादौ अत्र कर्मप्रवचनीययोग्यत्वं समवेतत्वं द्वितीयार्थः प्रियकारी साधुशब्दार्थः पूर्ववदन्वयः । "अप्रत्यादेरिति वक्तव्यमि"ति वार्तिकं येषां कर्मप्रवचनीयानां योगे सप्तमी विहिता तदन्यकर्मप्रवचनीययोगे सप्तमी न भवतीत्यर्थकं तेन मातरं प्रति परि अनु अभि वा साधुरित्यादौ न सप्तमी भवतीति । पञ्चम्या सह वैकल्पिकीं सप्तमीं दर्शयति । "सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रं कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवत इत्यर्थकम् । अद्य भुक्त्वा द्व्यहे द्व्यहाद्वा भोक्ता इत्यादौ सप्तमीपञ्चम्योः परत्वनिरूपितापरत्वाधिकरणकालवर्तित्वमर्थस्तत्र परत्वे समवेतत्वेन प्रकृत्यर्थस्यान्वयः क्त्वार्थोऽनन्तरत्वं द्व्यहेऽन्वेति तथा चाद्यवृत्तिभोजनानन्तरद्व्यहवृत्तिपरत्वनिरूपितापरत्वाधिकरणकालवृत्तिभोजनकर्तेति शाब्दबोधः । अत्र भोजनकर्तृतारूपकारकशक्त्योर्मध्ये कालः इहस्थोऽयं धानुष्कः क्रोशे क्रोशाद्वा लक्ष्यं विध्यति इत्यादौ दे-

शिकापरत्वनिरूपितपरत्वाधिकरणदेशवर्तित्वं सप्तमी-पञ्चम्योरर्थः तच्च कर्मद्वारा धात्वर्थफलेऽन्वेति विध्य-तेरवयवविभागानुकूलो व्यापारोऽर्थः छिदेस्तु आरम्भक-संयोगानर्ज्जकावयवविभागानुकूलो व्यापारोऽर्थ इति न छिद्रिपर्यायता तथा च क्रोशवृत्त्यपरत्वनिरूपितपरत्वा-धिकरणदेशवृत्तिर्यो लक्ष्यवृत्तिरवयवविभागस्तदनुकूल-व्यापारकर्त्ता इहस्थधानुष्कोऽयमित्यन्वयबोधः । अत्र कर्तृकर्मशक्त्योर्मध्ये अध्वा । वस्तुतस्तु कारकयोर्मध्येऽर्थे सप्तमीपञ्चम्यौ विभक्ती भवत इत्येव सूत्रार्थः । तत्र म-ध्यत्वं कालिकमपरत्वसमानाधिकरणपरत्वं दैशिकम-परत्वमेव तत्रापरत्वे प्रकृत्यर्थयोः कालदेशयोः समवे-तत्वेनान्वयः अवधितया कारकस्य कारकाधिकरणस्य चान्वयः कालिकमध्यत्वघटकपरत्वस्य निरूपकतया दैशिकापरत्वस्य स्वनिरूपितपरत्वसमवायेन कारका-धिकरणे परम्परया वा कारकेऽन्वयः तच्च कारकं यो-ग्यतावशात् कर्तृकर्मादिकं बोध्यम् । अद्य हविष्यं भो-क्ता द्व्यहे द्व्यहाद्वा निरामिषं भोक्ता अत्र हविष्यकर्मक-भोजनकर्त्रा तदधिकरणेनाद्यकालेन वाऽवधिमद् द्व्य-हवृत्ति यदपरत्वं तत्समानाधिकरणपरत्वस्य निरूपको निरूपककालवृत्तिर्वा निरामिषकर्मकभोजनकर्ताद्याधि-करणकहविष्यकर्मकभोजनकर्तेत्यन्वयबोधः । इह-स्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्यतीत्यादौ वेधकेन तदधिकरणदेशेन वाऽवधिमद्यत्परत्वं तन्निरूपकक्रो-शवृत्त्यपरत्वस्य निरूपकं तदधिकरणं तादृशदेशवृत्ति वा यल्लक्ष्यं तत्कर्मकवेधकर्ता इहस्थोऽयमित्यन्वयबोधः ।

इहाद्यशब्दार्थयोर्दिक्कालयोरधिकरणयोरवधित्वार्थं इ-
हाद्यशब्दयोरुपादानम् अवधिमत्त्वस्य अवधिमत्परत्व-
निरूपकत्वस्याधिकरणकालवृत्तित्वस्य चोल्लेखः संसर्गम-
र्यादया बोध्यः । अथ वा मध्यशब्दोऽन्तरालवाची तथा
चान्तरालत्वेऽर्थे सप्तमीपञ्चम्यौ भवत इति सूत्रार्थस्तत्र
कालिकमन्तरालत्वं परस्परनिरूपितकालिकपरत्वाप-
रत्वाधिकरणयोरनधिकरणत्वमत्यन्ताभाववत्त्वमिति या-
वत् । दैशिकं तु दैशिकपरत्वस्यावधिसमवायिनोरनधि-
करणत्वमत्यन्ताभाववत्त्वमिति यावत् तथा च कालि-
कपरत्वापरत्वयोरधिकरणकारकयोरधिकरणकालवृ-
त्तिकारकशक्त्योस्तत्कारकभावस्वरूपयोः । एवं दैशिक-
परत्वस्यावधिसमवायिनोः कारकयोरवधिसमवायिदे-
शवृत्तिकारकशक्त्योर्वा सुप्तिङादितो लाभात् का-
लाध्ववाचकपदोत्तरयोः सप्तमीपञ्चम्योरत्यन्ताभावप्रति-
योगित्वमर्थस्तत्र कालनिष्ठात्यन्ताभावप्रतियोगित्वं का-
रके चेदन्वेति स्वनिरूपितक्रियावत्त्वसंबन्धावच्छिन्नं का-
रकशक्तौ चेदन्वेति कालिकविशेषणतासंबन्धावच्छिन्न-
मेव देशनिष्ठात्यन्ताभावप्रतियोगित्वं तु कारकेऽय-
दैशिकसंसर्गावच्छिन्नं कारके कारकशक्तौ तु स्वनिरूप-
ककारकघटितपरम्परासंबन्धावच्छिन्नमन्वेति इत्थं च
संबन्धान्तरावच्छिन्नप्रतियोगित्वमादाय न प्रयोगाति-
प्रसङ्गः प्रतियोगित्वमन्वयितावच्छेदकधर्मावच्छिन्नमेव
भासते व्युत्पत्तिवैचित्र्यात् अतो द्वित्वावच्छिन्नाभावप्रति-
योगित्वमादाय न प्रयोगातिप्रसङ्गः । अत्यन्ताभावे प्र-
कृत्यर्थस्य स्वावच्छेदकधर्मव्यापकाधिकरणतानिरूपिता-

धेयतयाऽन्वयः। एवमद्य भोक्ता द्व्यहे द्व्यहाद्वा भोक्तेत्यादौ द्व्यहव्यापकवृत्त्यत्यन्ताभावप्रतियोगिभोक्तृभिन्नोऽद्य भोक्ता। अथ वा तथाविधात्यन्ताभावप्रतियोगिभोक्तृत्ववद्भिन्नोऽद्य भोक्ता इत्यन्वयबोधः। एवं इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्यतीत्यादौ क्रोशव्यापकवृत्त्यत्यन्ताभावप्रतियोगि यल्लक्ष्याभिन्नमधिकरणं लक्ष्यनिरूपितमाधेयत्वं वा तद्वृत्तिस्तद्वान्वा योऽवयवविभागस्तदनुकूलव्यापारकर्ताऽयमित्यन्वयबोधः। इत्थं च प्रतिदिनं भुञ्जाने द्व्यहे द्व्यहाद्वा भोक्तेति न प्रयोगः न वा एकप्रहारेण पादक्रोशार्धे च लक्ष्यं विध्यति पुरुषे क्रोशाद्वा लक्ष्यं विध्यतीति प्रयोगः। अत्यन्ताभावे व्यापकवृत्तित्वे प्रकृत्यर्थस्यान्वयोपगमात् स्नानादिकालावच्छेदेन द्व्यहनिष्ठात्यन्ताभावप्रतियोगिभोक्तृत्वस्य प्रतिदिनं भुञ्जाने सत्त्वान्न दर्शितप्रयोगः। कर्तृशक्तिमध्य एव कालः। गिरेः क्रोशे क्रोशाद्वा वनं गच्छति विहग इत्यादौ कर्मापादनयोर्मध्ये देशः पाटलिपुत्रेश्वरः विंशतौ योजनेषु विंशतेर्योजनेभ्यो वा काशीस्थाय ददातीत्यादौ कर्तृसंप्रदानयोर्मध्ये देशः। शिखरादुपत्यकायां क्रोशे क्रोशाद्वा पतति शिलेत्यादावपादानाधिकरणयोर्मध्ये देशः करणकारकान्तरयोर्मध्ये देशोऽपि न भवति। एवमन्यत्रापि कारकयोर्मध्ये देशः कालश्च बोध्य इति। शाब्दिकास्तु "तदस्मिन्नधिकमि"ति "यस्मादधिकमि"-तिसूत्रनिर्देशादधिकशब्दयोगे सप्तमीपञ्चम्यौ विशिष्येते अतो लोके लोकाद्वाऽधिको हरिरित्यादौ सप्तमी पञ्चमी च साधुरित्याहुः। तच्चिन्त्यं लोकेऽधिको हरिरित्यादौ निर्धारणे सप्तम्युपपत्तेः लोकादधिको हरिरित्यादौ "प-

ञ्चमी विभक्ते" इतिसूत्रेण पञ्चम्युपपत्तेरित्यस्य प्रागुक्तत्वादिति। "अधिरीश्वरे" इति सूत्रम्। ईश्वरार्थे द्योत्येऽधिः कर्मप्रवचनीयसंज्ञः स्यादित्यर्थकम् अधीत्यव्ययशब्दस्य कर्मप्रवचनीयसंज्ञां विधत्ते। कर्मप्रवचनीययुक्ते पञ्चमीं ज्ञापयति "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" इति सूत्रं यदत्राधिकस्याधिकरूपाधेयस्य द्योतकः यन्निरूपितस्येश्वरार्थस्य द्योतकः कर्मप्रवचनीयस्तत्र कर्मप्रवचनीययुक्ते सप्तमी भवतीत्यर्थकम्। उपशब्दस्याधिकार्थद्योतकत्वेऽपि कर्मप्रवचनीयसंज्ञाविधायकं "उपोऽधिके चे" ति सूत्रं द्वितीयाविवरणे प्रदर्शितम्। उपसुरेषु हरिरित्यादावुपशब्दद्योत्यं सप्तम्या आधिक्यमधस्तत्र प्रकृत्यर्थस्यावधिमत्त्वसंबन्धेनान्वयस्तथाविधस्याधिकारस्य हरावन्वयस्तथा च सुरावधिकाधिक्यवान् हरिरित्यन्वयबोधः। आधिक्यं तु प्रकृते निरवधिदयावत्त्वमथ वा बहुत्वव्याप्यसंख्याविशेषवद्गुणवत्त्वं बोध्यम्। उपाचार्येषु द्रोण इत्यादावपि काशिकोदाहरणेऽनया रीत्याऽन्वयो बोध्यः उपनिष्के कार्षापणमित्यादावपि मूल्यगतावयवगता वा बहुत्वव्याप्यसंख्यैवाधिक्यमिति पञ्चमीविवरणे प्रोक्तमिति। यस्य चेश्वर इत्येतावन्मात्रेण स्वामिद्योतकाधियोगे सप्तमीसिद्धौ यस्य चेश्वरवचनमित्यभिधानं स्वस्वामिनोरुभयोर्द्योतकस्याधिशब्दस्ययोगे सप्तमीं ज्ञापयति अत एव यस्य चेश्वरवचनमिति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी भवतीति काशिका। अधिभुवि राम इत्यादावधिशब्दद्योत्यं सप्तम्याः स्वामित्वमर्थस्तत्र भुवो निरूपकतयाऽन्वयः तथाविधस्वामित्वस्य रामेऽन्वयः तथा च भूनिरूपि-

तत्स्वामित्ववान् राम इत्यन्वयबोधः । अधिरामे भूरित्यादावधिशब्दद्योत्यं सप्तम्याः स्वत्वमर्थस्तत्र निरूपकतया प्रकृत्यर्थस्यान्वयस्तथा च रामनिरूपितस्वत्ववती भूरित्यन्वयबोधः । अधिब्रह्मदत्ते पञ्चालाः अधिपञ्चालेषु ब्रह्मदत्त इत्यादौ काशिकोदाहरणेऽप्यनया रीत्याऽन्वयो बोध्यः । ब्रह्मदत्तः पञ्चालराजः । "विभाषा कृञि" इति सूत्रम् अधिः करोतौ कर्मप्रवचनीयसंज्ञो वा स्यादित्यर्थकम् । अत्रेश्वराद्योतकस्याधेर्योगे सप्तमी न भवति यथा यदत्र मामधिकरिष्यतीत्यादौ अत्र धातोर्विनियोगोऽर्थः सप्तम्या आदेशवत्ःकर्मघटितसंबन्धावच्छिन्नमाधेयत्वमर्थः इदंपदार्थः कर्मविशेषस्तथा चेदंकर्मविशेषवृत्तिमत्कर्मकयदभिन्नभाविनियोगकर्तृत्वं वाक्यार्थः करोतियोगेऽधेः कर्मप्रवनीयसंज्ञाविधानं दर्शितकरोतिप्रयोगे गतिसंज्ञाप्रयुक्तस्य "तिङि चोदात्तवति" तिसूत्रेण प्रसक्तस्य निघातस्य निषेधार्थमिति । कर्मप्रवचनीययोगे द्वितीयापञ्चमीसप्तमीविधानं शेषषष्ठीबाधकं सर्वा ह्युपपदविभक्तयः शेषषष्ठ्यपवादिका इत्युक्तेरिति शाब्दिकाः । तच्चिन्त्यम् अपवादे प्रमाणाभावात्सूत्रभाष्यवार्तिकवृत्तिग्रन्थादावपवादकत्वस्यानभिधानात् मम प्रतिभातीत्यादौ शेषे षष्ठ्या दर्शनाच्च कर्मप्रवचनीयस्य स्वरूपसतो वा प्रतेर्योगे द्वितीयाविधानाद् अत एव बुभुक्षितं न प्रतिभाति किञ्चिदित्यादौ द्वितीयोपपद्यते । एवं च तस्य ते परिपन्थिन इत्यादावपि शेषे षष्ठ्युपपद्यते अन्यथा परिपन्थिघटकपरिशब्दयोगेऽपि कर्मप्रवचनीययोगे द्वितीयादर्शनात् "परिपन्थं च तिष्ठती" तिनिर्देशादुपपदविभक्तेः शेषषष्ठ्यप-

वादकत्वे दर्शितषष्ठ्या असाधुत्वप्रसङ्गात्। ननूपपदविभक्तेः शेषषष्ठ्यपवादकत्वविरहे पूर्वं प्रदर्शितं सर्पिषो विन्दुना योगो न त्वपिनेत्यभियुक्तवाक्यमनर्थकं स्यात् अपिना योगेऽपि शेषे षष्ठ्याः साधुत्वादुपपदविभक्तेरपवादकत्वविरहादिति चेन्न। सर्पिरपि स्यादित्यादिप्रयोगे द्वितीयाया असाधुत्वज्ञापनेन दर्शितस्याभियुक्तवाक्यस्य सार्थकत्वात् येषां कर्मप्रवचनीयस्य द्योत्यानां वाच्यानां वा हीनत्वाधिक्यवर्जनमर्यादादीनां न शेषत्वं तत्रायोग्यत्वादेव कर्मप्रवचनीययोगे न षष्ठी यथाऽनुहरिं सुरा उपसुरेषु हरिरपत्रिगर्तेभ्यो वृष्टो देव आकडारादेका संज्ञेत्यादौ यत्र तु योग्यता तत्र षष्ठी भवत्येव अत एवोपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इत्यादौ शेषे षष्ठी सङ्गच्छत इति।

इति विभक्त्यर्थनिर्णये;कारकसप्तम्यर्थनिर्णयः।

इति सप्तमीविवरणं समाप्तम्।

समाप्तश्चायं विभक्त्यर्थनिर्णयः।

---

अन्वीक्षानलिनीप्रमोदनरविस्त्रय्यादिविद्याऽऽपगा-
पाथोधिः प्रथितोऽर्थिकल्पविटपी वागीशनामा सुधीः।
गौरीतुल्यगुणा विदेहविषये देवी जयन्ती च यं
प्रासूत प्रहतैनसं गिरिधरं तस्येयमासीत्कृतिः ॥१॥

तर्केऽथ जैमिनिगिरि स्फुटशब्दविद्याऽ-
भ्यासे विहत्वरधियः शुचिशान्तरूपाः।
धीरा इमां मम कृतिं करुणारसेन
पूर्णे मनस्यविरतं परिचिन्तयन्तु ॥ २ ॥

इति।

शुभम्

चौखम्बा-संस्कृत-ग्रन्थमाला ।
( ग्रन्थसंख्या १२ )

# विभक्त्यर्थनिर्णयः ।

न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः ।

नैयायिकाग्रणीमहामहोपाध्यायझोपाख्य-
श्रीगिरिधरोपाध्यायविरचितः ।

—:०:—

तर्कतीर्थन्यायरत्नश्रीजीवनाथमिश्रेण परिशोधितः



काश्याम्

विद्याविलासनाम्नि यन्त्रालये श्रीयुत बाबू
हरिदासगुप्तेन मुद्रयित्वा प्रकाशितः ।

सन् १९०२ ईस्वी

वैक्रमसंवत् १९५८

शुभम् ।

# भूमिका।

विदितमस्त्वेतत्खलु सर्वेषामेवात्रभवतां कारकार्थानधिजिगमिषूणां व्युत्पित्सूनां च तत्र तत्रापि न्यायशेरणीपरिष्कृतमनसां प्रेक्षावतां संमदावहकार्य्यम्।

यत्किल जागरूकेष्वपि प्रथमादिनिखिलविभक्तिव्युत्पादनचणायोग्यताकेषु नैयायिकमतानुसारिषु व्युत्पत्तिवादशब्दशक्तिप्रकाशिकापदवाक्यरत्नाकरशब्दार्थरत्नादिषु बहुषु निबन्धेषु यथाऽयं मुद्रयित्वा प्रकाशनायोपक्रान्तः पुरातनोऽप्यधुनैव प्रकाशनाद्भव्यतामिव दधानोऽन्वर्थामाख्यां बिभ्रद् विभक्त्यर्थनिर्णयनामा ऽनतिदुरूहतया, विस्तृततया, परिपूर्णप्रतिपाद्यविषयतया, परोक्तिनिराकृतिसद्युक्त्यादिगर्भिततया चेदानीन्तनप्रचारशालीदृशग्रन्थापेक्षया ऽवश्यं स्वकीयविषयबुभुत्सुजनमानसेभ्यो ऽधिकं रोचिष्यते निबन्धो न तथा निबन्धान्तरम् इति संभाव्यते। अत्र च क्रमेण प्रथमादिसप्तविभक्तिविचारो भगवत्पाणिनिकृतसुब्विभक्तिविधायकसूत्रविवरणव्याजान्न्यायमतमनुरुन्धानेन ग्रन्थकर्त्रा विहितः। अस्य प्रणेता मिथिलादेशीयो मगरौलीग्रामवास्तव्यः फणदहकुलजन्मा झोपाख्यो गिरिधरोपाध्यायः। अयं च महोपाध्यायत्रागीशशर्मतो ज रन्नीदेव्याऽलम्भि, पदवाक्यरत्नाकरामृतोदयादिविविधनिबन्धनिबन्धुरशेषशास्त्राम्बुधिपारदृश्वनः श्रीनगरनृपालफतेहसाहगुरोः स्वकीयपितृव्यभ्रातुः श्रीगोकुलनाथोपाध्यायात् समधिगतविद्यश्च संपन्नः। गोकुलनाथोपाध्यायः पञ्चदशाधिकषोडशशततमशकाब्दे मिथिलामभूषयदिति तदीयग्रन्थादितो निश्चीयतेऽतोऽर्थात्तच्छिष्यस्यास्य ग्रन्थकर्त्तुरपि तत्समकालतेति निर्विचिकित्सम्। तच्छिष्यता तु स्वयमेवानेन विभक्त्यर्थनिर्णये तत्र तत्र "इति पदवाक्यरत्नाकरेऽस्मद्गुरुचरणा" इत्यादिलेखेन प्रकाशिता। पदवाक्यरत्नाकरस्य गोकुलनाथोपाध्यायकर्तृत्वे च तत्कृतग्रन्थान्तिमलेख एव प्रामाण्यपदवीमधिरोहति। अस्य च विभक्त्यर्थनिर्णयस्यैकमेव पुस्तकमधिगतं तदेवाश्रित्य श्रीयुतबाबूहरिदासगुप्तविज्ञप्त्यनुरोधादेतद्ग्रन्थरत्नं सं-

शोध्य तदीयविद्याविलासनामके यन्त्रालये प्राचीकशम् । एतद्ग्रन्थकर्त्तृसमयाद्यवधारणे मामकः श्रमस्तु दरभङ्गाभूपाश्रितमहामहोपाध्यायचित्रधरमिश्रैः स्वयमेव तत्सूचयित्वा परिहृत इति भृशमेतदीयोपकारं कलयामि, अस्य च कृतेऽपि श्रमपुरस्सरे शोधने शरीरिमात्रसाधारणभ्रान्त्यादिजनितं दोषं सौजन्यधुरीणैः सारस्पृहयालुभिः परिशीलितमरालचातुरीकैः विपश्चिद्भिरुपेक्ष्यमाणमाशासानः, सकलाध्येत्रध्यापकादिसौकर्यमेतद्ग्रन्थात्संभावयन् निबन्धुरपि तादृशबुधैकजनवेदनीयश्रमसाफल्यमधुनैवावधारयन् शोधनप्रकाशनादीनां, चापि गुणिदृक्पथगामितयैव सार्थकतां मन्यमानो गुणिजनाविर्भूतमेवैतद्व्यापारात्प्रीयमाणः परमेश्वरो विदधात्विति कामयते ।

१९५९ वर्षान्ते }

तर्कतीर्थन्यायरत्नोपाधिकः
श्रीजीवनाथमिश्रः

शुभम् ।



# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ८ | यत्किंचिद् | यत्किंचिद् |
| ३ | २३ | अनवच्छेदकत्व | अनवच्छेदकत्व |
| ४ | १ | रूपान्तःरस्य | रूपान्तरस्य |
| ४ | ५ | रस्मसंगच्छ | रस्मः संगच्छ |
| ५ | २० | वच्छिन्नत्वं | वच्छिन्नत्वं |
| ६ | १४ | त्वयेनामार्थं | त्वयं नामार्थं |
| ७ | २४ | तिङूर्थस्य | तिङर्थस्य |
| ८ | ४ | स्यतीत्यादो | स्यतीत्यादौ |
| ८ | २१ | योगित्वेना | योगित्वेना |
| ८ | २४ | तदूवारण | तद्वारण |
| ९ | २५ | स्वार्थकत्वच् | स्वार्थकत्वञ्च |
| ११ | ७ | करणत्वेनाऽन्वया | करणत्वे नाऽन्वयः |
| ११ | १९ | द्वितीयाथता | द्वितीयाऽर्थता |
| ११ | २० | मवच्छिन्ना | मवच्छिन्ना |
| १५ | १८ | द्वानुत्पत्यान्वय | द्वानुत्पत्त्यान्वय |
| २० | १९ | ऽन्यरत्वस्यै | ऽन्यतरत्वस्यै |
| २५ | ६ | निभादिशकल | निभादिसकल |
| २५ | ९ | स्वार्थप्रसिध्या | स्वार्थाप्रसिध्या |
| ३० | ६ | वहुज घटित | वहुजघटित |
| ३० | १६ | विशेषणाया | विशेषणतया |
| ३२ | २३ | नागकालयो | नागतकालयो |
| ३४ | १७ | तावच्छदक | तावच्छेदक |
| ३९ | ३ | प्रवशनीय | प्रवेशनीय |
| ३९ | ९ | धिकरण्य | धिकरण्य |
| ४७ | १४ | पात्पर्यं | तात्पर्यं |
| ४८ | २४ | वचनावहुश | वचनाद् वहुश |
| ५१ | १० | सिाध्यपुनर्वसू | सिध्यपुनर्वसू |

| | | | |
|---|---|---|---|
| ५४ | १० | सबोधनम् | सम्बोधनम् |
| ५५ | १२ | ममुपपन्नम् | मनुपपन्नम् |
| ५६ | १ | सम्बोधस्य | सम्बोध्यस्य |
| ६१ | १० | च्छब्द्स्यन्यत्रा | च्छब्द्स्यान्यत्ना |
| ७१ | १२ | क्रिय | क्रिया |
| ७१ | १९ | त | तु |
| ७१ | २२ | पप | नुपप |
| ७२ | १० | प्याति | ब्याति |
| ७२ | ११ | फव्य | फलव्य |
| ७२ | २३ | विरोग | वियोग |
| ७६ | ३ | इयं | इयां |
| ७७ | १२ | ससर्ग | संसर्ग |
| ७८ | १५ | धिकर | धिकरण |
| ७९ | ३ | पारास्या | पारस्या |
| ८० | १६ | रेक्यं | रैक्यं |
| ८१ | २२ | धेयव० | धेयत्व० |
| ८२ | १७ | पवत्यपि | पचत्यपि |
| ८२ | २२ | कर्मणां कर्मता | कर्मणां शराणां कर्मता |
| ८३ | १० | प्रतयो | प्रतियो |
| ८४ | १३ | रमत्या | नमत्या |
| ८४ | १९ | कर्तृवं | कर्तृत्वं |
| ८६ | १५ | म्याद् | म्यादि |
| ८७ | १ | दि्ती | द्विती |
| ८७ | ११ | प्रकृत्यार्था | प्रकृत्यर्था |
| ८७ | १३ | याच्छिन्न | यावच्छिन्न |
| ८७ | १७ | दि्ती | द्विती |
| ८८ | ७ | स्यैव | स्थैव |
| ८८ | ८ | ममवे | समवे |
| ८८ | १० | तत्रबोध | नञा बोध |
| ८८ | २५ | यतत्रो | यतश्चैत्रो |
| ९० | ६ | स्वन्दो | स्यन्दो |
| ९१ | ४ | दृति | दिति |

| | | | |
|---|---|---|---|
| ९३ | ५ | धवात् | धन्वात् |
| ९३ | ६ | नियध | निषेध |
| ९३ | २४ | मल्ला | मल्लो |
| ९४ | १३ | न्क्येन | न्म्येन |
| ९५ | २३ | मियत्र | मित्यत्र |
| ९६ | ८ | क | का |
| ९७ | १३ | प | प्र |
| ९७ | १० | भेस्य | भेदस्य |
| ९९ | १८ | ख्यानर्थ | ख्यार्थ |
| १०२ | ६ | कण्टः | कण्ठः |
| १०२ | १७ | मि | भि |
| १०२ | १९ | य | म |
| १०३ | १७ | वो | यो |
| १०९ | २४ | क्रिया | क्रिया |
| ११३ | २० | नाया | नामा |
| ११४ | १० | विशेष | निवेश |
| ११४ | १७ | ख्यात्वा | ख्यातवा |
| ११८ | २१ | पतया | पयतया |
| १२३ | २ | त्यत्ति | त्पत्ति |
| ११५ | १३ | क्रिया ना | क्रिया यस्य क्रिया ना |
| १२३ | ८ | ज्ञानस्वरूप | ज्ञानस्वरूपक्रियाप्रयोज्यत्वा-भावात् क्रियते घटः स्वयमे-वेत्यत्र तु तिङ्प्रत्ययार्थस्योत्प-त्तेः कृतिस्वरूपक्रिया |
| १२७ | २ | त्यत्ति | त्पत्ति |
| १३८ | २४ | पञ्च | पञ्च |
| १३९ | १३ | पया | पयो |
| १४२ | ३ | त्वर्थः | त्वमर्थः |
| १४२ | ७ | इया | इत्या |
| १४२ | १८ | विषत | विषयत |
| १४३ | १२ | पत्त | पत्ति |
| १४४ | १२ | व्यारा | व्यापारा |

| | | | |
|---|---|---|---|
| १४५ | १८ | स्वल्य | स्वल्प |
| १४६ | २० | भिद्दा | चिद्दा |
| १४७ | १० | तो | नो |
| १५० | २ | तण्डला | तण्डुला |
| १५० | १५ | तादृश | तादृश |
| १५१ | १७ | यज् | पज् |
| १५७ | ११ | दोग्धा | दोग्धी |
| १५९ | २० | त्वात | त्वात् |
| १६३ | ३ | यात्ता | यान्ता |
| १६६ | १६ | रायन्ता | ण्यन्ता |
| १६८ | ८ | त्यध | त्यर्थे |
| १८३ | २३ | फलवा | फलावा |
| १८६ | २५ | पार्थ | यार्थ |
| १८४ | २ | वाक | वाचक |
| १८४ | ८ | द्वितीययोश्च द्वयं | द्वितीययोश्च परत्वान्वयिस-मवेतत्वमवधिश्च द्वयं |
| १८६ | १७ | पन्थ | पन्थं |
| १८७ | ११ | तथ | तथा |
| १८७ | १६ | देवदे | देवंदे |
| १८७ | २५ | क्षाफा | क्षाफ |
| १८८ | २ | सूत्र | सूत्रे |
| १८८ | ४ | सूत्र | सूत्रं |
| १८९ | १९ | णेचा | णेच्छाचा |
| १९० | १८ | व्दन | व्देन |
| १९० | २५ | कार्यां | कां |
| १९१ | २३ | वच्छेदक | वच्छेदकताऽवच्छेदक |
| १९२ | १० | मामा | माना |
| १९६ | १२ | प्रतिधात | प्रतिघात |
| १८६ | १४ | दीप्यते रर्थे | दीप्यतेरर्थे |
| २०४ | १७ | द्वितीयवा | द्वितीयावा |
| २११ | २१ | प्रकत्या | प्रकृत्या |
| २१२ | १ | द्रूणैः | द्रोणैः |

| | | | |
|---|---|---|---|
| २१२ | ५ | मध्यांदिना | मध्यांदिना |
| २१२ | ९ | मतुवर्थता | मतुबर्थता |
| २१८ | ७ | दशित | दर्शित |
| २२१ | ८ | पत्त्यामह | पत्न्या सह |
| २२२ | १८ | च्छेदकमबन्धा | च्छेदकसंबन्धा |
| २२२ | २१ | विशष्यतया | विशेष्यतया |
| २२२ | २१ | विशपणतया | विशेषणतया |
| २२२ | २२ | चाधयत्व | चाधेयत्व |
| २२३ | ५ | कन्याभिन्न | कन्याऽभिन्न |
| २२३ | १२ | विशेष्येऽबाधे | विशेष्ये बोध |
| २२४ | २४ | सहार्थः एवं | सहार्थः समानकालिकत्वं म-हार्थे कालिकं विशेषणतया दैशिकं विशेष्यतया दीर्घत्व-मन्वेति श्वासदण्डा इत्यस्य दण्डसदृशाः श्वासा इत्यर्थः एवं |
| २२४ | २४ | दिवसवृत्तेर्वा | दिवसवृत्तेर्निशावृत्तेर्वा |
| २२५ | १ | स्तद्धतः | स्तद्धन्तः |
| २२८ | २२ | कालिकत्वविये | कालिकत्वे विषय |
| २३१ | २५ | निगमकाले | निर्गमकाले |
| २३२ | ८ | विधयाऽर्थस्तेन | विधयाऽर्थस्तेन |
| २३७ | २४ | यत्र द्वितीया | यत्र तु पथ इति द्वितीया |
| २४३ | १२ | युक्तऽप्रधाने | सहयुक्तेऽप्रधाने |
| २४३ | २५ | चाक्षुप्रयोज | चाक्षुषप्रयोज |
| २४९ | २ | कार्यभाव | कार्याभाव |
| २५३ | ६ | व्यावृत्तः प्रतीते | व्यावृत्तेः प्रतीते |
| २५३ | २४ | भावद्यावर्त | भावत्वद्यावर्त |
| २६० | १५ | धमपदं | धूमपदं |
| २६३ | ५ | पदस्यं | पदस्य |
| २६६ | १८ | प्रतियोगिता | प्रतियोगिता |
| २६८ | ४ | तृतीयाथ | तृतीयार्थ |
| २६८ | १४ | कर्मतिङ्योगात् | कर्मतिङ्योगात् |
| २७१ | २ | कामनया गवि | कामनया दीयमानायां गवि |

| | | | |
|---|---|---|---|
| २७४ | १ | त्यत्राहन्यमानः | त्यत्राहन्यमानः |
| २७५ | १७ | संभवेवा | संभवेन |
| २७९ | १२ | न्हुतिस्तिष्ठतिः | न्हुविस्तिष्ठतिः |
| २८० | १ | भावे वा फले | भावे ज्ञानसामान्यविषयत्वाभावे वा फले |
| २८० | २० | तत्रेच्छायांउत्कर्ष | तत्रेच्छायां चतुर्थ्यर्थे उत्कर्ष |
| २८१ | १ | निरूपितावच्छेदकतायाः प्रतियोगित्वेनसम्बन्धेनचा | ... ... ... ... ... ... ... ... ... ... |
| २८९ | ६ | धेयत्वं वा भार्याकर्म | धेयत्वं वा भार्याविशेषितमन्वेति भार्याकर्म |
| २९० | १८ | प्रयोगानुपपतेः | प्रयोगे चतुर्थीप्रयोगानुपपतेः |
| ३१२ | १९ | सम्बन्धस्य घटके | सम्बन्धस्य संयोगसमवायस्वरूपस्य घटके |
| ३२२ | ९ | पत्रात्पतपितङ्गे | पत्रात्पतति पतङ्गे |
| ३२३ | २ | भ्रान्ताःरचना | भ्रान्ताःसंसर्गरचना |
| ३२५ | १५ | वन्धस्यप्रतियोगि | वन्धेन पत्रान्तरानिष्ठभेदस्यापि पतने सत्त्वात् वृत्त्यनियामकसंबन्धस्य प्रतियोगि |
| ३३९ | ११ | प्रयोजकोनिश्चयस्त्वर्थात्कर्तव्यत्वप्र | प्रयोजको निश्चयाभाव इति वाक्यार्थः निश्चयस्त्वर्थात्कर्तव्यत्वप्र |
| ३५२ | २३ | ज्ञानस्यचरणा | ज्ञानमन्धस्य चरणा |
| ३५४ | ११ | न्वयोवाध्यः | न्वयोबोध्यः |
| ३५४ | १२ | शेषेषष्ठ्यव | शेषे षष्ठ्येव |
| ३५४ | १५ | न्वयवाधः | न्वयबोधः |
| ३५४ | १८ | पपत्तः त्यगा | पपत्तिः त्यागा |
| ३५४ | २० | यवेभ्या | यवेभ्यो |
| ३५५ | २२ | शब्दना | शब्देना |
| ३६० | १ | त्रीणि पितृत | त्रीणि मातृतः त्रीणि पितृतः |
| ३६० | २ | मज्ञानः इति | मज्ञानः पितृत इति |
| ३६३ | ९ | दर्शितः प्रभवत्यर्थ | दर्शितः प्रकाशःप्रभवत्यर्थः |
| ३६३ | १२ | त्रस्यचाक्षुषस्यवा | त्रस्य लौकिकस्य चाक्षुषस्यप्रत्यक्षस्य वा |

| | | | |
|---|---|---|---|
| ३६८ | ९ | शाब्दद्वयस्यवाअभाव | शाब्दद्वयस्य संयोगस्य वा अभावश्च |
| ३७९ | २२ | भेदस्याप्रसिद्धावपि | भेदस्याऽव्यावर्त्तकत्वेपि तद्व-त्सामान्याभेदस्य प्रसिद्धावपि |
| ४०२ | १ | त्रप्राति | त्र विभक्त्यर्थाधेयत्वद्वारैवा-न्वयः यत्र तु नान्वयस्तत्र प्राति |
| ४०६ | १ | प्रतियोगिक | प्रतियोगिताक |
| ४०६ | २५ | प्रुत्वं | रूप्यत्वं |
| ४०८ | ६ | निरूपकत्वा | निरूपकस्वामित्वा |
| ४०८ | २० | धात्वय | धात्वर्थ |
| ४०९ | २३ | नदीकूलानि | नदी कूलानि |
| ४१८ | ३ | चन्द्रमसः | चन्द्रमः |
| ४२१ | १७ | पक्वपूर्वी वेदा | पक्वपूर्वी सूपान् अधीतपूर्वी वेदान् |
| ४२५ | ८ | मिति कृत | मिति कृतपूर्वीकटमित्यत्र कृत् |
| ४२७ | १७ | प्रमाणा वस्य | प्रमाणत्वस्य |
| ४२७ | २५ | तर्क | कर्त्तृ |
| ४२९ | ७ | कट | कट |
| ४२९ | ८ | वाराणासी | वाराणसी |
| ४३१ | २० | तस्यति | तस्येति |
| ४४१ | ११ | वार्द्रेन्धन | वार्द्रेन्धनं |
| ४४६ | १४ | त्वशदेन | त्वशब्देन |
| ४५१ | १० | तिवस्य | तिन्वस्य |
| ४५४ | १८ | न्तिड | न्तिङ |
| ४५४ | १९ | रता | रया |
| ४५८ | | करणात | करणता |
| ४५९ | १२ | भदस्य | भेदस्य |
| ४५९ | १३ | रात्तर | रोत्तर |
| ४५९ | २४ | त्वात् नच | त्वात् न युक्तमेतद् नच |
| ४६१ | ९ | पत्तः | पक्तेः |
| ४६७ | २४ | त्वेऽभ्यु | त्वाभ्यु |
| ४६९ | ६ | तादि | त्यादि |
| ४६९ | २४ | नराणां मध्ये | नराणां मध्ये क्षत्रियः शूर इ-त्यादौ मध्ये |
| ४७५ | ५ | पञ्चमी | सप्तमी |

# विषयसूची ।

इति ।

शुभम् ।

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सु-
मीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।
२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।
३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण,
धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।
४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच
शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।
५ भारतवर्षीयैः ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं
वार्षिकमग्रिमं मूल्यम मुद्राः ७ आणकाः ८
६ कालान्तरे प्रतिस्तबकं " " १ " ८
७ प्रापणव्ययः पृथग् नास्ति ।
८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

| | ग्रन्थः | विषयः | स्तबकाः |
|---|---|---|---|
| (१) | संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) | शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) | श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) | भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्यभाषा प्रकाश सहितम् । सं० | ( वेदान्तः ) | २ |
| (५) | करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) | भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) | न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः । | (मीमांसा) | २ |
| (८) | ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सं० | ( वेदान्त ) | ६ |
| (९) | स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णम् । | ( जैनदर्शनम् ) | २ |
| (१०) | सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री६ यामुनमुनिभिर्विरचितम् । सं० | (वेदान्त) | १ |
| (११) | न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचित व्याख्योपेतः | ( वेदान्तः) | १ |
| (१२) | विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म०म० श्रीगिरिधरोपाध्यायरचितः । सं० | (न्यायः) | १ |
| (१३) | विधिरसायनम् श्रीअप्पयदीक्षितकृतम् सम्पूर्णम् | (मीमांसा) | २ |
| (१४) | न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । | (मीमांसा) | ७ |
| (१५) | शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । | ( वेदान्त ) | १ |

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालय

THE CHOWKHAMBA SANSKRIT SERIES, BENARES.

...onthly Magazine consists of very rare and invaluable ...anskrit works on Vedic Literature, Hindu Philosophy, ...at sciences, general literature and Purāṇas &c. that never been published before. The monthly issue of this ...gazine dealing with one subject contains 100 pages of Demy octavo size, printed neatly in beautiful types on good thick paper, after being carefully corrected by the Pandits of the Government Sanskrit College Benares and other learned men.

The works included in the Magazine hitherto issued and ...hose in course of preparation for publication are as follows:—

| | *Names of Books,* | | *Fasciculus ready for Sale* |
|---|---|---|---|
| 1. | Sanskāraratnamālā, by Gopinâtha Bhatta. | (Sanskâra) | 2 |
| 2. | Shabdakoustubha, by Bhattoji Dikshita. | (Vyâkarana) | 10 |
| 3. | Sloka Vârtika of Kumârila Bhatta together with the Commentary called Nyâyaratnâkara, by Pârthasârathi Misra. ( Complete ) | (Mimânsâ) | 10. |
| 4. | The Vedânta-Tattvatraya, of Sri Lokacharyya along with Bhatta-Bhusha-Prakasha of Sri Narayana Tirtha. (Complete) | (Vedanta) | 2. |
| 5. | Karana-Prakash, by Brahmadeva. (Complete) | (Jyotisha) | 1. |
| 6. | Bhatta-Chintamani, of Gaga Bhatta. | ( Mimansa ) | 2. |
| 7. | Nyaya-Ratna-Mala, of Sri Parthasarathi Misra. | ( Do ) | 2. |
| 8. | Brahma Sutra, with Commentary called Viggyanamrita. | ( Vedanta ) | 6. |
| 9. | Syadwâda Manjari, by Mallishéna with a Commentary by Hémchandra. | (Jaina Dars'ana) | 2. |
| 10. | Siddhitrayam by Yamun Muni. | ( Vedanta ) | 1. |
| 11. | Nyâya-Makarand, of Sri Anand-Bodh Bhattarkacharyya with annotations by Chit-Sukh Muni. | ( Do ) | 1. |
| 12. | Vibhaktyartha-Nirnaya, By M. M. Sri Giridhara Upadhyaya. | ( Nyaya ) | 5. |
| 13. | Vidhirasâyana, of Appaya Dîkshita. | (Mimansa) | 2. |
| 14. | Nyayasudha, A commentary on Tanravartika, By Pandit Someshwara Bhatta. | (Mimansa) | 7. |
| 15. | Siva-stotravali, by Utpaladevacharya. With the commentary of Kshemaraja. | (Vedanta) | 1. |

FOR INDIA, BURMA & CEYLON.

| | | | | |
|---|---|---|---|---|
| Annual subscription (in advance) | Rs. | 7 | 8 | 0 |
| Single copy | " | 1 | 0 | 0 |

FOR FOREIGN COUNTRIES.

| | £. | s. | d. |
|---|---|---|---|
| Annual subscription (in advance) ... | 0 | 15 | 0 |
| Single copy ... ... ... ... | 0 | 1 | 9 |

To be had from:— *Postage free.*

H. D. GUPTA, *Secretary,*